Radha Krishna

# व्याकरणप्रभाकरः

Vyākaraṇa prabhākara

श्रीमद्गोस्वामिप्रवरश्रीराधाकृष्णेन
महाराजरणजीतसिंहनृपतेःसभापण्डितेन
पञ्चनदप्रदेशीयमहाविद्यालयस्यसेनेटाख्य
सभायाःसभ्यतमेन विरचितः ॥

## पूर्वार्द्धः

सम्वत् १९३०

लवपुरस्थमित्रविलासयन्त्रालये
पण्डित श्रीमुकुन्दरामेण मुद्रितः

ख्रिष्टीयाब्द १८७३

प्रथमवारे ५२५ खण्ड — मूल्य ॥)

# ॐ नमो विघ्नहर्त्रे

गणेशं स्वगुरून्स्वेष्टं वाग्देवीं प्रणमाम्यहं व्याकृ
तौ बालबोधार्थं पाणिनीयसूत्रावहेन वै १ गुरवः श्री
व्रजराजाः शास्त्रार्थानां तु पारगास्त्वासन् तद्दर्शिते
न विधिना राधाकृष्णेन रच्यते यत्नात् २ मायोऽस्मि
न्संध्यसन्ध्यादिसहितो रूपसंग्रहः बहुप्रयोजनोऽये
न विना न स्यात्पदार्थधीः ३ सरूपभेदयुक्शब्दा
अव्ययाः स्वार्थसंयुताः स्त्रीप्रत्ययास्ततस्तेषां नियमा
अपि दर्शिताः ४ कारकाश्च समासाश्च तद्धिताश्च ततः
परं पूर्वार्द्धे उत्तरार्द्धे तु धातूनां शानसमकं ५ तद्रू
पदर्शनं चापि कृउदाहरणानि च सन्त्यत्र मत्कृताः
श्लोकाः प्राचीनाबहवोऽपि च ६। अथ वर्णो द्विधा ज्ञेयाः
स्वरव्यंजनभेदतः वर्णमालागताः काद्या व्यञ्जनास्ते हल
स्तोऽपि च ७ अकाराद्याः स्वरा ज्ञेया अचश्चापि ते मताः
निरपेक्षाः स्वरा ज्ञेयाः स्वरापेक्षा हलः स्मृताः ८ ह्रस्वादी
र्घाः प्लुताश्चाचः कुक्कुटध्वनितो मताः अर्द्धमात्रं तु तं
ज्ञेयमेकमात्रं लघूदितम् ९ द्विमात्रं गुरुवर्णः स्यात्
त्रिमात्रं तु प्लुतं मतम् उदात्ताद्यास्त्रयो ज्ञेयाः षड्जादि
स्वरलक्षणैः १० आद्ये निषादगांधारौ मध्ये रिषभधै
वतौ स्वरितप्रभवा ज्ञेयाः षड्जमध्यमधैवताः ११
स्युः क·च·ट·त·पा वर्गाः स्पर्शाः पंचभिरक्षरैः कण्ठेति

सर्गोः कुहकाः तालुनीचुयशास्तथा १२ मूर्द्धन्याऋटुरा
षश्चदन्तास्लृतुलसामताः उपध्मानीयमोष्ठोन्त्यंपवर्गौका
रकौतथा १३ एपेकंठोष्ठजौद्वौतौओऔस्तः कण्ठतालु
जौ दन्तोष्ठजोवोज्ञस्वारोनस्योवर्गान्तगाअपि १४
अन्तस्थायरलावश्चोष्माणःशषसहास्तथा अइउऋ
ल्टवैह्रस्वाः आईऊॠचदीर्घकाः १५ सुतोह्णान्समा
ह्नतोभवतीतिविनिश्चयः अर्.एओगुणसंज्ञाःस्युःआ
र्.ऐ.औवृद्धिसंज्ञकाः १६ इ.उ.ऋ.ल्ट.सभेदाख्याः
इकोयवरलायणः स्वयत्नस्थानयोरैक्यात्सावर्ण्यंचा
त्तरेषुवै १७ वर्णाभावोवसानंस्यात्सन्धिरन्तरयोर्भ
वेत् संयोगःसन्धिरेवास्तिसचस्याद्धलांभवेत् १८
विभक्त्यंतंपदंज्ञेयंतिङंतंस्यात्क्रियापदम् हृहोगुणे
यणेदीर्घेह्रस्वादीर्घौपिदृश्यते १९ कानिचिद्युक्यसू
त्राणिलिख्यन्तेलक्ष्यहेतवे सन्ध्यर्थेनियमाश्चापिद
र्शिताःस्वत्रसम्मताः २० वन्देहंसज्जनान्विज्ञान्ज्ञा
ज्ञानत्मापन्नार्थधीः पानिन्दारमतानीचाडुम्बंपीत्वा
ह्निवन्स्थिताः २१ ।

## अथ सन्धयः

### अकः सवर्णे दीर्घः (१)

अ इ उ ऋ लृ इत्येषां सदीर्घाणां यथा यथा तेष्वेव परेषु द्वयोः स्थाने दीर्घः

उदाहरणानि यथा

स्थाने भवति यथा जातम् जातं

अ अ आ दैत्य अरिः दैत्यारिः पाप अरिः पापारिः

अ आ आ परम आत्मा परमात्मा पाप आत्मा पापात्मा

आ अ आ गंगा अत्र गंगात्र महा अद्रिः महाद्रिः

आ आ आ गंगा आत्मजः गंगात्मजः देवता आत्मजः देवतात्मजः

इ इ ई कवि इन्द्रः कवीन्द्रः करीन्द्रः हरीन्द्रः गिरीन्द्रः

इ ई ई कपि ईशः कपीशः कवीशः अधीशः गिरीशः

ई इ ई मही इन्द्रः महीन्द्रः सुधीन्द्रः जानकीन्द्रः

ई ई ई गौरी ईशः गौरीशः लक्ष्मीशः महीशः सुधीशः

उ उ ऊ भानु उष्मा भानूष्मा ऋतु उद्भवः ऋतूद्भवः

उ ऊ ऊ जानु ऊर्ध्व जानूर्ध्व गुरूहणं ऋतूष्मा

ऊ उ ऊ चमू उत्सवः चमूत्सवः वधूत्सवः हूहूरस्य

ऊ ऊ ऊ वधू ऊढा वधूढा चमूढा भूर्द्धेम्

ऋ ऋ ॠ पितृ ऋणं पितॄणं भ्रातॄणं दातॄद्धिः

शाकंध्वादिषुनित्यमत्रगुणंपररूपंभवति ॥

शाक अंधुः शाकन्धुः कर्क अन्धुः कर्कन्धुः मार्त्त अंडः मार्त्तण्डः

मनस् ईषा मनीषा

## आद्गुणः

अकाराकाराभ्यां सदीर्घेषु इ·उ·ऋ·ऌ·षु परेषु पूर्वपरयो र्द्वयोः स्थाने तत्स्थानीयो गुणः

### उदाहरणानि

| स्थाने | | भवति | यथा | | जातम् |
|---|---|---|---|---|---|
| अ | इ | ए | उप | इन्द्रः | उपेन्द्रः गजेन्द्रः नरेन्द्रः |
| अ | ई | ए | गण | ईशः | गणेशः नरेशः सुरेशः |
| आ | इ | ए | रमा | इच्छा | रमेच्छा महेन्द्रः मालेति |
| आ | ई | ए | गंगा | ईशः | गंगेशः रमेशः उमेशः |
| अ | उ | ओ | हित | उपदेशः | हितोपदेशः पुत्रोत्सवः नीलोत्पलं |
| अ | ऊ | ओ | हार | ऊर्ध्वे | हारोर्ध्वे गदोर्ध्वे जलनोष्मा |
| आ | उ | ओ | गंगा | उदकं | गंगोदकं यमुनोदकं मोमे |
| आ | ऊ | ओ | गंगा | ऊर्मयः | गंगोर्मयः मुद्रोना शिवोर्मिः |
| अ | ऋ | अर् | देव | ऋषिः | देवर्षिः धनर्द्धिः प्रतापर्द्धिः |
| आ | ऋ | अर् | महा | ऋषिः | महर्षिः मायर्द्धिः मालर्द्धिः |
| अ | ऌ | अल् | तव | ऌकारः | तवल्कारः |
| आ | ऌ | अल् | महा | ऌकारः | महल्कारः |

### ऋत्यकः

ऋकारे परतः अ·इ·उ·ऋ·ऌ· वर्णानाम्पदान्ते प्रकृतिभावोभवति ब्रह्माऋषिः ब्रह्मर्षिः ब्रह्मऋषिः शुचीऋषिः शुच्यृषिः शुचिऋषिः इत्यादि असवर्णे स्वरे परे पदान्तयो रीऊवर्णयोः शाकल्यस्य मते ह्रस्वः

कुमारी ऋषभा कुमार्यृषभा कुमारिऋषभा

वधू ऋषभा वध्वृषभा वधुऋषभा

## वृद्धिरेचि

अकारात् एऐ ओऔ परतः पूर्व परयोर्द्वयोः स्थाने तत्स्थानी या वृद्धिः स्यात्

स्थाने भवति यथा जातम्

अ ए ऐ तवैव ममैव एकैकम्

आ ए ऐ गंगा एषा गंगैषा सदैव तदैव कृष्णैकादशी

अ ऐ ऐ देव ऐश्वर्य्यं देवैश्वर्य्यं नरैक्यं धनैकाम् सैक्यं

आ ऐ ऐ वार्त्ता ऐक्यं वार्त्तैक्यं सीमैक्यं महैरावती गंगायमुनैक्यं

अ ओ औ मिष्ट ओदनं मिष्टौदनं जलौघः शारीरौजः

आ ओ औ महा औषधी महौषधी वलौषधी गंगौघः

अ औ औ कृष्ण औत्कण्ठ्यं कृष्णौत्कण्ठ्यं वलौद्धत्यं चित्तौदार्य्यं

आ औ औ महा औषधं महौषधं सदौत्सुक्यं सभौत्कर्ष्यं

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिर्भवति ॥

उप एधते उपैधते विश्वऊहः विश्वौहः उप एति, उपैति

## प्रादि-पररूपम्

अकारान्तोपसर्गात् एओकारादौ धातौ परतः पररूपं न तु वृद्धिः

स्थाने भवति यथा जातम्

अ ए. ए. प्र एजते प्रेजते

अ ओ ओ उप ओषति उपोषति

अकारादोमि आङि च पररूपं शिवाय ओं नमः शिवायोंनमः

शिव एहि शिवेहि

## इकोयणचि

इकः स्थाने क्रमात् यवरलाः स्युः स्वभिन्नेचि

उदाहरणानि क्रमेण

इ अ य् दधि अत्र दध्यत्र

इ आ य् दधि आनय दध्यानय

| | | | | | |
|---|---|---|---|---|---|
| इ | उ | य् | अभि | उदयः | अभ्युदयः |
| इ | ऊ | य् | अति | ऊर्ध्वम् | अत्यूर्ध्वम् |
| इ | ऋ | य् | इ | ऋकारः | यृकारः |
| इ | ए | य् | भूमि | एधितं | भूम्येधितम् |
| इ | ऐ | य् | भूमि | ऐश्वर्य्य | भूम्यैश्वर्य्यम् |
| इ | ओ | य् | पचति | ओदनं | पचत्योदनं |
| इ | औ | य् | अति | औदार्य्य | अत्यौदार्य्यम् |

## दीर्घेषु

इकोसावर्णेशाकल्यस्यह्रस्वश्चेतिपदेह्रस्वः समासेतुनह्रस्वः यएवएव यथा गौरी औ गौर्य्यौ

| स्थाने | भवति | | यथा | | जातम् | |
|---|---|---|---|---|---|---|
| ई | अ | य् | चक्री | अत्र | चक्र्यत्र | चक्रिअत्र |
| ई | आ | य् | देवी | आगता | देव्यागता | देविआगता |
| ई | उ | य् | सुधी | उपास्युः | सुद्ध्युपास्यः |  |
| ई | ऊ | य् | स्त्री | ऊढा | स्त्र्यूढा | स्त्रिऊढा |
| ई | ऋ | य् | देवी | ऋद्धिः | देव्यृद्धिः | देविऋद्धिः |
| ई | ए | यू | नारी | एषा | नार्य्येषा | नारिएषा |
| ई | ऐ | य् | नदी | ऐरावती | नद्यैरावती | नदिऐरावती |
| ई | ओ | य् | महती | ओचता | महत्योचता | महतिओचता |
| ई | औ | य् | देवी | औदार्य्यम् | देव्यौदार्य्यम् |  |

## ह्रस्वोकारस्थानेवः

| स्थाने | परतः | भवति | | यथा | जातम् |
|---|---|---|---|---|---|
| उ | अ | व् | मधु | अत्र | मध्वत्र |
| उ | आ | व् | मधु | आनय | मध्वानय |
| उ | इ | व् | मधु | इच्छा | मध्विच्छा |
| उ | ई | व् | पटु | ईहा | पट्वीहा |
| उ | ऋ | व् | धातु | ऋद्धिः | धात्वृद्धिः |

| | | | | | |
|---|---|---|---|---|---|
| उ | ए | व् | प्रभु | एषः | प्रभ्वेषः |
| उ | ऐ | व् | प्रभु | ऐश्वर्य्यं | प्रभ्वैश्वर्य्यम् |
| उ | ओ | व् | गुरु | ओकः | गुर्वोकः |
| उ | औ | व् | प्रभु | औदार्य्यं | प्रभ्वौदार्य्यम् |

## दीर्घऊकारस्थानेवः

| स्थाने | परतः | भवति | | यथा | जातम् |
|---|---|---|---|---|---|
| ऊ | अ | व् | सरयू | अम्बु | सरय्वम्बु |
| ऊ | आ | व् | चमू | आगमनम् | चम्वागमनम् |
| ऊ | इ | व् | वधू | इच्छा | वध्विच्छा |
| ऊ | ई | व् | वधू | ईशः | वध्वीशः |
| ऊ | ऋ | व् | वर्षाभू | ऋद्धिः | वर्षाभ्वृद्धिः |
| ऊ | ए | व् | चमू | एधनम् | चम्वेधनम् |
| ऊ | ऐ | व् | भू | ऐश्वर्य्यं | भ्वैश्वर्य्यम् |
| ऊ | ओ | व् | सरयू | ओघः | सरय्वोघः |
| ऊ | औ | व् | वधू | औदार्य्यं | वध्वौदार्य्यम् |

## ऋकारस्थानेर्

| स्थाने | परतः | भवति | | यथा | जातम् |
|---|---|---|---|---|---|
| ऋ | अ | र् | दातृ | अनुज्ञा | दात्रनुज्ञा |
| ऋ | आ | र् | दातृ | आज्ञा | दात्राज्ञा |
| ऋ | इ | र् | धातृ | इच्छा | धात्रिच्छा |
| ऋ | ई | र् | मातृ | ईहितं | मात्रीहितम् |
| ऋ | उ | र् | पितृ | उपासनं | पित्रुपासनम् |
| ऋ | ऊ | र् | भ्रातृ | ऊढना | भ्रात्रूढना |
| ऋ | ए | र् | स्वसृ | एधनं | स्वस्रेधनम् |
| ऋ | ऐ | र् | नृ | ऐश्वर्य्यं | न्रैश्वर्य्यम् |

| | | | |
|---|---|---|---|
| ऋ | ओ | र् | प्रशान्त ओकः प्रशान्तोकः |
| ऋ | औ | र् | होतृ औदार्य्यम् होत्रौदार्य्यम् |

### लृकारस्थानेल्

| स्थाने | परतः | भवति | यथा जातम् |
|---|---|---|---|
| लृ | अ | लृ | अंशः लंशः लृ ईशः। लीशः |
| लृ | आ | लृ | आकृतिः लाकृतिः |

### एचोयवायावः

अचिपरतः ए ऐ ओ औ स्थाने अय् अव् आय् आव् इतिक्रमा न्स्युः

### एकारस्थाने अय् यथा

लोपःशाकल्यस्य

| स्थाने | परतः | भवति | यथा | | जातम् | |
|---|---|---|---|---|---|---|
| ए | अ | अय् | शे | अनम् | शयनम् | |
| ए | आ | अय् | हरे | आयाहि | हरयायाहि | हरआयाहि |
| ए | इ | अय् | हरे | इमंत्राहि | हरयिमंत्राहि | हरइमंत्राहि |
| ए | ई | अय् | हरे | ईश्वरोसि | हरयीश्वरोसि | हरईश्वरोसि |
| ए | उ | अय् | हरे | उदयंकुरु | हरयुदयंकुरु | हरउदयंकुरु |
| ए | ऊ | अय् | हरे | ऊर्ध्वंरक्ष | हरयूर्ध्वंरक्ष | हरऊर्ध्वंरक्ष |
| ए | ऋ | अय् | हरे | ऋद्धिंकुरु | हरयृद्धिंकुरु | हरऋद्धिंकुरु |
| ए | ए | अय् | हरे | एहि | हरयेहि | हरएहि |
| ए | ऐ | अय् | हरे | ऐश्वर्य्यंदेहि | हरयैश्वर्य्यंदेहि | हरऐश्वर्य्यंदेहि |
| ए | ओ | अय् | हरे | ओंत्वम् | हरयोंत्वम् | हरओंत्वम् |
| ए | औ | अय् | हरे | औदार्यंकुरु | हरयौदार्यंकुरु | हरऔदार्यंकुरु |

### ओकारस्थानेअव् यथा

| स्थाने | परतः | भवति | यथा | जातम् | शाकल्यस्यमते लोपः |
|---|---|---|---|---|---|
| ओ | अ | अव् | भो अनम् | भवनं | |

ओ आ अव् विष्णो आगच्छ विष्णवागच्छ विष्ण आगच्छ
ओ इ अव् विष्णो इति विष्णविति विष्ण इति
ओ ई अव् विष्णो ईतितो रक्ष विष्णवीतितो रक्ष विष्ण ईतितो रक्ष
ओ उ अव् विष्णो उत्कंठास्ति विष्णवुत्कंठास्ति विष्ण उत्कंठास्ति
ओ ऊ अव् विष्णो ऊर्ध्वं नय विष्णवूर्ध्वं नय विष्ण ऊर्ध्वं नय
ओ ऋ अव् विष्णो ऋद्धिं कुरु विष्णवृद्धिं कुरु विष्ण ऋद्धिं कुरु
ओ ए अव् विष्णो एहि विष्णवेहि विष्ण एहि
ओ ऐ अव् विष्णो ऐक्यं कुरु विष्णवैक्यं कुरु विष्ण ऐक्यं कुरु
ओ ओ अव् विष्णो ओदनं देहि विष्णवोदनं देहि विष्ण ओदनं देहि
ओ औ अव् विष्णो औषधं देहि विष्णवौषधं देहि विष्ण औषधं देहि

## ऐ स्थाने आय् यथा

स्थाने पक्षः भवति यथा जातम् जातम्

ऐ अ आय् है अत्रागच्छ हायत्रागच्छ हा अत्रागच्छ
ऐ आ आय् है आयाहि हायायाहि हा आयाहि
ऐ इ आय् है इच्छसि हायिच्छसि हा इच्छसि
ऐ ई आय् है ईश्वर हायीश्वर हा ईश्वर
ऐ उ आय् है उद्धर मां हायुद्धर मां हा उद्धर मां
ऐ ऊ आय् है ऊढे हायूढे हा ऊढे
ऐ ऋ आय् है ऋषे हायृषे हा ऋषे
ऐ ए आय् है एजक हायेजक हा एजक
ऐ ऐ आय् है ऐरावति हायैरावति हा ऐरावति
ऐ ओ आय् है ओकाधिप हायोकाधिप हा ओकाधिप
ऐ औ आय् है औरस हायौरस हा औरस

## औस्थानेआव्‌यथा

| स्थाने | परतः | भवति | यथा | जातम् | जातम् |
|---|---|---|---|---|---|
| औ | अ | आव् | कौ अत्रन्यौ | कावत्रन्यौ | काअत्रन्यौ |
| औ | आ | आव् | कौ आगतौ | कावागतौ | काआगतौ |
| औ | इ | आव् | कौ इच्छतः | काविच्छतः | काइच्छतः |
| औ | ई | आव् | कौ ईहेते | कावीहेते | काईहेते |
| औ | उ | आव् | कौ उज्झितौ | कावुज्झितौ | काउज्झितौ |
| औ | ऊ | आव् | कौ ऊढवतौ | कावूढवतौ | काऊढवतौ |
| औ | ऋ | आव् | कौ ऋच्छतः | कावृच्छतः | काऋच्छतः |
| औ | ए | आव् | कौ एधेते | कावेधेते | काएधेते |
| औ | ऐ | आव् | कौ ऐक्यकरौ | कावैक्यकरौ | काऐक्यकरौ |
| औ | ओ | आव् | कौ ओष्ठजौ | कावोष्ठजौ | काओष्ठजौ |
| औ | औ | आव् | कौ औत्सुक्यकरौ | कावौत्सुक्यकरौ | काऔत्सुक्यकरौ |

## एङः पदान्तादति

पदान्तस्थात् एकारात् ओकारात्च अकारेपरे अकारेणसहपूर्वरूपमेव न अय् अवौ

ए अ हरे अव हरेऽव

ओ अ विष्णो अव विष्णोऽव

## वांतोयिप्रत्यये

यादिप्रत्ययेपरतः ओ इत्यस्य अव् औ इत्यस्यच आव् स्यात्

गो यम् गव्यम् नौ यम् नाव्यम् गो शब्दात् यूतिशब्दे पिक्वचिदवादेशः गव्यूतिः

## लोपःशाकल्यस्य

अवर्णे पूर्वयोः पदांतस्य यकार वकारयोर्वा अचिलोपः

हरे इह हरयिह लोपे हरइह

श्रियै उद्यतः श्रियायुद्यतः लोपे श्रियाउद्यतः
विष्णो इह विष्णाविह लोपे विष्णाइह
असौ आदित्यः असावादित्यः लोपे असाआदित्यः

### अचोरहाभ्यांद्वे

अचः पराभ्यां रेफहकाराभ्यां परेषां ह्‌·र·श·ष·स· वर्णभि न्नानां हलां विकल्पेन द्वितं भवति।
रकाराद्यथा हर्यनुभवः हर्य्यनुभवः अर्कः अर्क्कः
हकारात् यथा ब्रह्म ब्रह्म्म अपह्नुते अपह्न्नुते नह्यस्ति नह्य्यस्ति

### ईदूदेद्द्विवचनंप्रगृह्यं

ई· ऊ· ए इत्येतदंतं द्विवचनमचि यथा स्थितं स्यात्
हरी एतौ हरीएतौ विष्णू इमौ विष्णूइमौ
गंगे अमू गंगेअमू पचेते इमौ पचेतेइमौ

### स्तोःश्चुनाश्चुः

शकारचवर्गयोर्योगे सस्य शस्तकारदकारनकाराणान्चच जञाः क्रमात्स्युः।

शयोगे सस्य शो यथा हरिस् शेते हरिश्शेते हरिःशेते वाशरीतिपक्षे विसर्गपक्ष
च योगे सस्य शो यथा रामस् चिनोति रामश्चिनोति
छ योगे सस्य शो यथा हरस् छादयति हरश्छादयति
श योगे तस्य चो यथा अग्निचित् शेते अग्निचिच्शेते
शश्छोटीतिछः अग्निचिच्छेते
च योगे तस्य चो यथा मरुत् चक्रं मरुच्चक्रम्
छ योगे तस्य चो यथा शत्रुजित् छिनत्ति शत्रुजिच्छिनत्ति
ज योगे दस्य जो यथा क्लांजशोंते रणजिद् जयति रणजिज्जयति

झ योगे दस्य जो यथा शत्रुजित् झंकारः झलांजशोन्तेशत्रुजिज्झंकारः
ञ योगे दस्य ञो यथा तत्-ञकारः तद्-ञकारः तज्-ञकारः।
यरोऽनुनासिके॰ तञ्ञकारः।
श योगे नस्य ञो यथा सन्शंभुः सन्शंभुः शितुगितित्वकि सञ्छंभुः
च योगे नस्य ञो यथा पन् चति पञ्चति तन् चति तञ्चति
छ योगे नस्य ञो यथा सन् छ्याकः सञ्छ्याकः श्चुत्वोत्तरं ञत्वः
ज योगे नस्य ञो यथा शार्ङ्गिन् जयः शार्ङ्गिञ्जयः
झ योगे नस्य ञो यथा सर्वन् झंकारः सर्वञ्झंकारः
ञ योगे नस्य ञो यथा महान् ञकारः महाञ्ञकारः

ष्टुनाष्टुः

षकार टवर्गयो योगे सस्यवः त,द,ना, नान्त्व ट,ड,णाः क्रमात्स्युः

ष योगे सस्य षो यथा रामस् षष्ठः रामष्षष्ठः
ट योगे सस्य षो यथा रामस् टीकते रामष्टीकते
ट योगे तस्य टो यथा तत् टीका तट्टीका
ठ योगे तस्य टो यथा बृहत् ठंकारः बृहट्ठंकारः
ड योगे तस्य डो यथा बृहत् डीनं बृहद्डीनम् बृहड्डीनम् झलांजशोन्ते
ढ योगे तस्य ढो यथा बृहत्ढक्का बृहद्ढक्का बृहड्ढक्का झलांजशोन्ते
ट योगे नस्य णो यथा महान् टंकारः महाण्टंकारः
ठ योगे नस्य णो यथा महान् ठंकारः महाण्ठंकारः
ड योगे नस्य णो यथा महान् डामरः महाण्डामरः
ढ योगे नस्य णो यथा महान् ढौकते महाण्ढौकते
ण योगे नस्य णो यथा महान् णकारः महाण्णकारः

नपदान्तात्ताहोरनाम् नवति नगरीणाम् नस्यात्
पदांतटवर्गात् सकार तवर्गयोः षकार टवर्गौनस्तः
यथा षट् संतः मधुलिट् तरति
अत्रत्वभवत्येव
षट् नां षण्णाम् षट् नवतिः षण्णवतिः
षट् नगर्य्यः षण्णगर्य्यः

## तोःषि

षकारे परे तवर्गस्यटवर्गोन सन् षष्ठः अत्रसन्षष्ठःइतिन

## झलांजशोन्ते

पदान्ते प्रायोवर्गीयस्य तृतीयः अवसानेत्वा भवति।
तकारस्यत्लकारे परतः लकार एवस्यात्
वाक् ईशः वागीशः वाक् वाग् दिक् गजः। दिग्गजः
अच् अत्र अजत्र अच् अज् शाक् चनः। शाग्चनः
दधिलिट् अत्र दधिलिड्त्र लिट् लिड् वाक् जाले। वाग्जालम्
तत् रूपं तद्रूपम् तत् तद् वाक् दाने। वाग्दानम्
अनुष्टुप् अत्र अनुष्टुब्त्र अनुष्टुप् अनुष्टुब् धिक् धूर्ते। धिग्धूर्तम्

## तोर्लि

लकारेपरे तकार नकारयो र्निरनुनासिक सानुनासिकौ
लकारौ क्रमतः स्तः
तत् लयः तल्लयः विद्वान् लिखति विद्वाँल्लिखति

## यरोनुनासिकेऽनुनासिकोवा

पंचमे परत लजडगीयाणां पदान्तस्या तां स्ववर्ग पंचमो
नुनासिकोवा
वाक् नयति वाङ्नयति पक्षेवाग् नयति
अच् मात्रं अञ्मात्रम् पक्षेअज्मात्रं

मधुलिट् नाथः मधुलिण्णाथः पक्षे मधुलिड्नाथः
तत् नयति तन्नयति पक्षे तद्नयति
अनुष्टुप् मानम् अनुष्टुम्मानम् पक्षे अनुष्टुब्मानम्

मकारादिप्रत्ययेतुनित्यमनुनासिकः

तत् मात्रम् तन्मात्रम् तत् मयं तन्मयं अत्रतद्मयंन

खरिच

वर्गद्वितीयतृतीयचतुर्थानां प्रथमाः स्युः वर्गप्रथमद्विती
ययोः परतः शषसेषुच
चित्रलिख् खनति चित्रलिक् खनति
भेद् ता भेत्ता रिरिभ्सते रिरिप्सते
अग्निमथ् शंका अग्निमत् शंका अग्निमच्छंका।
सुहृद् षंढः सुहृत्षंढः

झयोहोन्यतरस्याम्

वर्गेभ्यो त्तरहकारस्यस्ववर्गचतुर्थोवास्यात्
वाक् हरिः वाग्घरिः अच् हीनं अज्झीनं स्वलिट् हसति स्व
तत् हविः तद्धविः त्रिष्टुप् हर्षः त्रिष्टुब्भर्षः लिड्ढसति

शश्छोटि

पदान्तवर्गाद्यानांशस्यछोटि
वाक् शेते वाक्छेते
अच् शासनं अच्छासनम्
दधिलिट् शेते दधिलिट्छेते
तत् श्लोकेन तत्श्लोकेन तच्छ्लोकेन
त्रिष्टुप् शोभते त्रिष्टुप्छोभते

## मोऽनुस्वारः

व्यञ्जनवर्णेषु परतः मस्यानुस्वारः पदान्ते
गृहम् याति गृहंयाति। हरिम् वन्दे हरिंवंदे
धनम् रक्षति धनंरक्षति। पुत्रम् लभते पुत्रंलभते
शिष्यम् शास्ति शिष्यंशास्ति। अयम् षट्पदः अयंषट्पदः
शत्रुम् हन्ति शत्रुंहंति। निधिम् संस्थापयति निधिंसंस्थापयति

## नश्चापदान्तस्य झलि

अपदान्तनकारमकारयोः शषसहेषु परतोऽनुस्वारः।
नकारस्य· यशान्·सि। यशांसि। सर्पीन्षि। सर्पींषि।
धनून्·षि। धनूंषि। पयान्·सि। पयांसि।
मकारस्य· आक्रम्·स्यते। आक्रंस्यते। अधिजिगाम्·स
ते। अधिजिगांसते।

## अवसानेविचमस्यमएव

त्वाम् माम् तम् एतम्
गृहम् अत्र गृहमत्र पुत्रम् आनयति पुत्रमानयति
धनम् इच्छति धनमिच्छति शत्रुम् ईषेति शत्रुमीषेति
अयम् उमापतिः अयमुमापतिः ताम् ऊचुः तामूचुः
भवताम् ऋद्धिः भवतामृद्धिः
तम् एकम् तमेकम्
किम् ऐश्वर्य्यम् किमैश्वर्यम्
तम् ओघम् तमोघम्
वरम् औत्कण्ठ्यम् वरमौत्कंठ्यम्

## ङमोह्रस्वादचिङमुण् नित्यम्

ह्रस्वात् ङ·ण·ना नामचिद्वित्वम्
प्रत्यङ् आत्मा प्रत्यङ्ङात्मा

सुगण् ईशः सुगण्णीशः
सन् अच्युतः सन्नच्युतः

## अनुस्वारस्ययियिपरसवर्णः

अपदान्ते स्ववर्गपंचमोनुस्वारस्यस्पर्शे परतः

अं कितः अङ्कितः संचः सञ्चः
अं चितः अञ्चितः पं डितः पण्डितः
ठं ठिराजः ठुण्ठिराजः पं था पन्था
चं दनम् चन्दनम् इं धनं इन्धनम्
रं भा रम्भा

## पदान्तस्यवा

त्वं करोषि त्वङ्करोषि त्वंकरोषि
किं चातुर्य्यं किञ्चातुर्य्यं किंचातुर्य्यं
सं यन्ता सँय्यन्ता संयन्ता
सं वत्सरः सँव्वत्सरः संवत्सरः
यं लोकम् यँल्लोकम् यंलोकं
किं टीका किण्टीका किंटीका
किं तत्र किन्तत्र किंतत्र
किं पश्यसि किम्पश्यसि किंपश्यसि

यद्यप्यनुस्वारस्ययियिपरसवर्ण इति नित्यविधिनाविकल्पाभावएव तथापिपुराणाद्यन्तर्गतशिष्टादिलेखबलाद्भ्रमनिवृत्त्यर्थं विसंधिपाठोप्यादरणीय एव

## नश्छव्यप्रशान्

सान्त् छ· य· व· र· ल· न· ङ·· ञ· म· परकेषु च·छ· ट·ठ· तथेषु परतः पदान्त नकारस्य सकारः पूर्वान्तरोपरि अनुस्वारः पक्षेनुनासिकश्च

पश्पन् चकितः पश्पंश्चकितः पश्पँश्चकितः
शार्ङ्गिन् छिन्धि शार्ङ्गिंश्छिन्धि शार्ङ्गिँश्छिन्धि
कान् टिट्टिभान् कांष्टिट्टिभान् काँष्टिट्टिभान्
कान् ठक्कुरान् कांष्ठक्कुरान् काँष्ठक्कुरान्
पतन् तरुः पतंस्तरुः पतँस्तरुः
स्पृशन् थूत्कारः स्पृशंस्थूत्कारः स्पृशँस्थूत्कारः

डः सि धुट्

डकारात्सकारे परतः मध्ये तकारागमो वा
षड् सन्तः षट्त्सन्तः षट्सन्तः
लिड् सु लिट्त्सु लिट्सु

छे च

ह्रस्वाच्छकारे परतः मध्ये चकारागमः दीर्घात्पदान्ताद्वा आ
ङ्नो नित्यमेव

ह्रस्वात्

स्व छः स्वच्छः अच्छः गच्छति
इ छति इच्छति इच्छति
दीर्घात् चे छिद्यते चेच्छिद्यते

पदान्ताद्वा

लक्ष्मी छाया लक्ष्मी च्छाया लक्ष्मीछाया
आङ्नोनित्यं आ छादयति आच्छादयति माच्छिदत्

रोः सुपि

अहन् शब्दस्य नकारस्य रकारो भवति नतु विभक्तौ
अहन् अहः अहरहः अहन्। गणः अहर्गणः

# अथविसर्गसंधिः

सकारश्च शकारश्च जिह्वामूलीय एवच उपध्मानीयकश्च विसर्गो विकृतिस्तथा ओकारदीर्घलोपाश्च यरवर्णौ तथामतौ एकादशप्रकारा हि विसर्गरूपबोधकाः ३॥

## विसर्जनीयस्यसः

१ सयथा सतथ वर्णेषु परतः विसर्गस्य सकारः

सपरतः नतयः सन्तु नतयस्सन्तु देवास्सन्ति

तपरतः रामः त्राता रामस्त्राता कस्त्वम्

थपरतः कः थुत्कारः कस्थुत्कारः देवस्थकारः

क्वचित्प्रत्यय प्रभृतिस्थ ककार पकारयोः परतः विसर्गस्य सकारः

पयः पाशं पयस्पाशम् यशः कल्पम् यशस्कल्पम्

२ शकारो यथा शचछ वर्णेषु परतः विसर्गस्य शः

शपरतः हरिः शेते हरिश्शेते हरिःशेते वाशरीति पक्षेविसर्गोत्र

चपरतः पूर्णः चन्द्रः पूर्णश्चन्द्रः कश्चतुरः

छपरतः कः छलति कश्छलति कश्छात्रः

## कुप्वोः ᳵकᳵपौच

३ जिह्वामूलीयो यथा ककार खकार योःपरतः विसर्गस्यार्द्ध विसर्ग सदृशो जिह्वामूलीयो वा

कपरतः कः करोति कᳵ करोति कः करोति

खपरतः कः खनति कᳵ खनति कः खनति

कुप्वोः ≍कः ≍पौ च

४ उपध्मानीयो यथा। पकार फकार योः परतः विसर्ग
स्याद्द विसर्ग सदृश उपध्मानीयो वा
प परतः। कः पठति क≍पठति कः पठति
फ परतः। कः फलति क≍फलति कः फलति

कस्कादिषु च

ककार पकार योः परतः इकार उकारोत्तर विसर्गस्य ष
५ षकारो यथा। क परतः सर्पिः कुण्डिका सर्पिष्कुण्डिका
क परतः धनुः कपालम् धनुष्कपालम्
प परतः सर्पिः पात्रम् सर्पिष्पात्रम्
प परतः भ्रातुः पुत्रः भ्रातुष्पुत्रः

खरवसानयोर्विसर्जनीयः

६ विसर्गविकृतिर्यथा। अवसाने विसर्गस्य विसर्ग एव
क· ख· प· फ· श· ष· स· वर्णेषु च परतः
घटः पटः हरिः वृद्धिः ऋद्धिः
कः करोति कः खनति कः पठति कः फलति
हरिः शेते कः सर्प्पः कः षाण्मातुरः

हशि च

७ ओकारो यथा। अकारान्तात् अकार वर्गतृतीयचतुर्थ
पंचमेषु परतः यरलवहेषु च परतः
विसर्गस्य ओकारः
शिवः अर्च्यः शिवोर्च्यः रामः गच्छति रामो गच्छति
कः चातकः कोच्चातकः कः जागर्त्ति को जागर्त्ति
सुन्दरः ऊंकारः सुन्दरोऊंकारः कः डामरः कोडामरः
विद्रद्रः ढुंढिः विद्रदरो ढुंढिः कः दाता को दाता

कः धर्मः कोधर्मः कः नायकः कोनायकः
कः वंद्यः कोवंद्यः कः भेदः कोभेदः
कः मंत्री कोमंत्री कः याति कोयाति
कः लाभः कोलाभः कः वक्ता कोवक्ता
कः हर्त्ता कोहर्त्ता

## रोरि

रकारे परतः रकारलोपः लोपनिमित्तके रकारे परतः अ इ उ वर्णानां दीर्घश्च

८ दीर्घोयथा पुनः रमते पुनारमते बलिःराजा बलीराजा संमतिः रथोः संमतीरथोः पटुःराजते पटूराजते

९ लोपोयथा भोभगो अघो अपूर्वस्ययोशि पतङ्गतर विसर्गस्य यकारो भवति वर्गप्रथम द्वितीय शषसभिन्न वर्णेषु परतः लोपः शाकल्यस्य इतिसर्वेषाम् अकारात् ह्रस्वाकार भिन्ने चि परेलोप लोपोवा दीर्घोकारात् हलिमात्रे भो भगो प्रभृति पूर्वस्य च हलिनित्यम्
भोः देवाः भोदेवाः भगोः नमस्ते भगोनमस्ते अघोः याहि अघोयाहि अत्रनित्यंलोपः

वालोपोयथा

सः आगतः सआगतः सयागतः
एषः आगतः एषआगतः एषयागतः
देवाः अत्र देवाअत्र देवायत्र
नराः इह नराइह नरायिह
नृपः ईक्षते नृप ईक्षते नृपयीक्षते
नारदः उवाच नारदउवाच नारदयुवाच
देवाः ऊचुः देवाऊचुः देवायूचुः

हताः एधन्ते हताएधन्ते हतायेधन्ते
कः ऐश्वर्य्यवान् कऐश्वर्य्यवान् कयैश्वर्य्यवान्
कः औरसः कऔरसः कयौरसः
१० यकारो यथा भोभगो‸अपूर्वस्य योऽशि ‸अघो
सः आगतः सयागतः एषः आगतः एषयागतः
११ अआभिन्नस्वरोत्तरविसर्गस्य रेफोऽचि वर्गतृतीयचतु
र्थपञ्चमयलवहेषु परतः स्वरपरककारान्ताव्यय
स्यस्य अदन्तसम्बुद्धिस्थस्य च विसर्गस्य स्थाने रकारः
पूर्वोक्तेषु परतः

हरिः अत्र हरिरत्र श्रीः अत्र श्रीरत्र पटुः आद्यः पटुराद्यः
वर्षाभूः एषः वर्षाभूरेषः हरेः आराधनं हरेराराधनं
धनेः उत्कर्षः धनेरुत्कर्षः प्रभोः आदेशः प्रभोरादेशः
नौः आगता नौरागता हरिः गर्जति हरिर्गर्ज्जति
शत्रोः जातः शत्रोर्ज्जातः हरेः जन्म हरेर्जन्म
वायोः झंकारः वायोर्झंकारः गुरोः डिम्भः गुरोर्डिम्भः
प्रभुः ढुंढिः प्रभुर्ढुंढिः धेनोः दानम् धेनोर्दानम्
यतेः धर्म्मः यतेर्धर्म्मः हरेः नाम हरेर्नाम
रिपोः बाधा रिपोर्बाधा गुरोः भार्य्या गुरोर्भार्य्या
बंधोः मानं बंधोर्मानं गुणैः युक्तः गुणैर्युक्तः
धनेः लाभः धनेर्लाभः शिशोः वलयः शिशोर्वलयः
रिपोः हन्ता रिपोर्हन्ता पुनः अत्र पुनरत्र
स्वः व्ययं स्वर्व्ययम् अन्तः इह अन्तरिह
प्रातः एतत् प्रातरेतत् निः अर्थकं निरर्थकं
दुः आशा दुराशा पुनः भोक्ता पुनर्भोक्ता
प्रातः मंगलं प्रातर्मंगलं स्वः यातः स्वर्यातः

अंतः द्रितः अंतर्द्रितः

एतत्तदोः सुलोपोकोरनञ्समासेहलि

एतत्तच्छब्दयोः ककाररहितयोर्हलिविसर्गलोपः नञ्तनञ्समासे

वरमेषः ददाति वरमेषददाति सः तु सतु

सः च सच एषः विष्णुः एषविष्णुः

सः शंभु स शंभु सः हरिः सहरिः

## अथषत्वविधानम्

इ· उ· ऋ· ऌ· ए· ऐ· ओ· औ· क· ख· र· ल· वर्णेभ्यः परस्य प्रत्यय सकारस्यमूर्द्धन्यः षः हरिषु· गुरुषु· कर्त्तषु· ऌषु· रामेषु· गोषु· ग्लोषु· नौषु· वा त्वक्षु· प्रत्यङ्क्षु· चतुर्षु· कमलेषु· इत्यादि।

नकारस्यान्यनुस्वारेणविसर्गेणचान्तरायेऽपि

धनूंषि आशीःषु

यत्रसहधातोः साडितिरूपन्तत्रैतत्सकारस्यषः

तुराषाट् तुराषाड् इत्यादि

इकारादिवर्णेभ्यः परेषां· शास्· वस्· घस्· स्विद्· स्वद्· सञ्ज स्वप्· स्मिङ्· धातूनां सस्यषः तथैवस्वरदन्त्यवर्णपरक सकारादीनांमेक· सृप· सृ· स्तॄ· स्तृ· ज्र· स्तस्त्यै वर्जितानांचसस्यषः शिष्टः उषतुः जक्षतुः सिष्वदे असिष्वदत् इत्यादि

यत्रसनः षत्वम्भवति तत्राभ्यासात्परस्यसौतिएयन्तयोरेव

तुष्टूषति· सुष्वापयिष्यति सनः षत्वाभावेत्वभ्यासात्पर
स्य भवत्येव तिष्ठासति· अन्यत्र· सिसिक्षति इत्यादि·
स्विद्· स्वद्· सह् एषां ण्यन्तानां षोन· सिष्वेदयिषति।
सिष्वादयिषति· सिसाहयिषति।

उपसर्गस्थात् षत्वनिमित्तात्परेषां सुनोत्यादीनां सस्य
षः केषांचिदर्थविशेष उपसर्गविशेषेच।

तेयथा। विषुणोति· प्रतिषुवति· निष्पाति· अनुष्टौ
ति· अधिष्ठोभति· प्रतिष्ठास्यति· अभिषेणयति· नि
षेधति· गत्यर्थे सेधतेर्न· गंगां विसेधति· गच्छतीत्य
र्थः· निषिञ्चति· अधिषञ्जते· अतिष्वंजते निषीद
ति. प्रतेस्तुन· प्रतिसीदति· विष्टभ्नोति· प्रतिष्टभ्नाति·
अथोपसर्गविशेषादौ· विष्वणति· अवष्वणति· सशब्दं
भुंक्ते इत्यर्थः।

अवष्टभ्नोति· भ्नातिवा· आलम्बते अविदूरेणेत्यर्थः
परिनिवीत्युपसर्गविशेषात्· परिषेवते· निषेवते·
विषेवते· एवं सित· सय· सिवु· सह· सुट्· स्तु· स्वंजा
नामपिज्ञेयम्।

सुनोत्यादितः सेवतेः पर्यन्तानामडव्यवायेपिषत्वम्
अभ्यासविषये तु स्थादीनामेव सकारस्य षत्वम्
व्यषुणोत्· प्रत्यषुवत्· न्यषात्· अन्वष्टौत्· अध्य
ष्टोभत् प्रत्यष्ठात्· अभ्यषेणयत्· न्यषेधीत्· इत्या
दि।। अभ्यासे· अधितष्ठौ प्रतिषिषेणयिषति· नि
षिषेध· अभिषिषेच इत्यादि।

इतरेषां तु· अभिसुषाव· परिससौ· इत्यादि।

परि नि·विभ्यः सिवादीनामडव्यवाये वा षत्वं तेषु सह

धातोर्यत्र सोढ इतिरूपं नत्रकेनापिषत्वन्न· सिवू· सह्· स्तुट्· स्तु· स्वञ्ज· एतेसिवादयः। परिषीव्यति पर्य्यषीव्यत्· पर्य्यसीव्यत्· पर्य्यषहत्· पर्य्यसहत्· इत्यादि परिसोढा।

अनु· वि· परि· अभि· नि· पूर्वकस्यस्यन्दतेरप्राणिकर्तृकस्यसस्यषोवा।

अनुष्यन्दते· अनुस्यन्देतेवा जलम् मत्स्योदके अनुस्यंदेते अनुष्यंदेतेवा प्राणिभुत्· अनुस्यन्दते· इत्यादेव विपूर्वस्यस्कन्दधातोर्निष्ठाभिन्ने कृत्प्रत्ययेपरेषत्वं· परिपूर्वस्यतु सर्वत्र विष्कन्ता· विस्कन्ता· निष्ठायांतु विस्कन्नः इत्येव· परिस्कन्दति· परिष्कंदति· परिष्कण्णः परिस्कन्ता। परिष्कन्ता इत्यादि प्राच्यभरतानाम्मतेनिष्ठायामपिष्कन्दः।

निर्·नि· वि· भ्यः परयोः स्फुर· स्फुल धात्वोस्सस्यवाषः। निःस्फुरति· निःष्फुरति· निष्फुरति· निस्फुरति· विष्फुरति विस्फुरति एवंस्फुलतेः।

वेः परस्यस्कम्भातेर्नित्यंषः

विष्कभ्नोति। विष्कभ्नाति।

समासेऽङ्गुलेःपरस्यसङ्गस्यसस्य षः

अङ्गुलिषङ्गः असमासेतु अङ्गुलेः सङ्गः

भीरुशब्दात्समासेस्थानस्यसस्यषः

भीरुष्ठानम् अन्यत्रभीरोः स्थानम्।

अग्नेःपरेषांस्तुत्·सोमशब्दयोः समासेषः सोमस्यतुज्योतिरायुरग्निभ्यः अग्निष्टुत्· अग्निष्टोमः अग्नीषोमौ ज्योतिष्टोमः· आयुःष्टोमःअसमासेतुज्योतिषः सोमः

षष्ठ्यन्तमातृपितृशब्दात् समासे षष्ठ्यलुक्पक्षे स्वसृशब्दसकारस्य वा षत्वं लुक्पक्षे तु नित्यम्।

मातुःष्वसा· मातुः स्वसा· पितुःष्वसा· पितुः स्वसा· मातृष्वसा। पितृष्वसा असमासे तु मातुः स्वसा पितुः स्वसा

अभिनिस् इति संघात पूर्वस्य स्तन धातोः सस्य षः शब्दसंज्ञायां अभिनिष्टानो वर्णः शब्दसंज्ञायां किम् अभिनिःस्तनति मृदङ्गः

षकारेः विच परे उपसर्गप्रादुःशब्दाभ्यां परस्याः स्धातोः सस्य षः।

निषन्ति· प्रादुःषन्ति· निष्यात्· प्रादुःष्यात्

सु· वि· नि· दुर्· पम्यः परेषां कृत संप्रसारणस्य स्वप्धातोः क्लिजंत सुद्· धातोः समशब्दस्य च षः।

सुषुषुपतुः सुषुप्यात्· विषूतिः निषूतिः विषमः इत्यादि।

निनदीभ्यां स्नाधातोः षत्वं प्रावीण्यार्थे।

निष्णातः शास्त्रेषु नदीष्णः कौशलभिन्ने तु निस्नातः इत्यादि।

सूत्रे वाच्ये प्रति पूर्वस्यापि

प्रतिष्णातं सूत्रम् शुद्ध मित्यर्थः

वि· कु· शमि· परि पम्यः स्थलशब्दस्य षत्वं गोत्रे वाच्ये तु कपिपूर्वस्य विष्ठलम्· कुष्ठलम्· शमिष्ठलम्· परिष्ठलम्· कपिष्ठलो नाम यस्यास्य पुत्रः कापिष्ठलिः अन्यत्र तु कपीनां स्थलम् कपिस्थलम्

अग्रगामित्यर्थे प्र पूर्वस्य· अम्ब· आम्ब· गो· भूमि· सव्य· अप· द्वि· त्रि· कु· शे· कु· शंकु· अंगु· मंजि· पुंजि· परमे· वर्हिः दिवि·

अग्नि एभ्यः परस्यस्तस्य इति रूपस्यषत्वम्।
प्रष्ठोगोः अग्रेगच्छतीत्यर्थः अग्रेतिकिम्· प्रस्थः अम्बष्ठः
आम्बष्ठः· गोष्ठः· भूमिष्ठः· सव्यष्ठः· अपष्ठः· द्विष्ठः· त्रिष्ठः·
कुष्ठः शेकुष्ठः· शंकुष्ठः इत्यादि।

वृत्तासनयोर्वाच्ययोर्विश्रवेस्यावन्तस्यस्त्र धातोः षत्वम्

वैदिकनाम्नितुचश्मन्तस्य विष्टरोवृत्तः· विष्टरः आस
नम् विष्टारः पंक्तिश्छन्दः· विस्तीर्यन्तेस्मिन्नक्षराणीत्यधि
करणेघञ्

गवि· युधि· शब्दाभ्यांस्थिरस्यसस्यषः सुषामादिगणेपि
गविष्ठिरः युधिष्ठिरः· सुषामा· सुषंधिः

णकारवर्ज्जमिकारादिभ्यः परस्येकार परसकारस्य षत्वं
संज्ञायाम् नतत्रवाचकात्परस्यतुवा

हरिषेणः· एकारपरस्यकिम् हरिसक्थः संज्ञायांकिम्
पृथुसेनः णकारात्तु· विष्वक्सेनः· इकारादिभ्यःकिम् स
र्वसेनः

नक्षत्रे रोहिणीषेनः रोहिणीसेनः अत्रापिणकारात्·
शतभिक्सेनः इत्येव

इकारादिभ्योह्रस्वेभ्यःपरस्यसकारस्य नादौनद्धिनेप
रेषत्वम्

निर्गतोवर्णाश्रमेभ्य इतिनिष्ठ्यः चाण्डालः अतिषा
येनसर्पिः सर्पिष्टमम्

निस्· शब्दसकारस्यतपधात्वौपरे आसेवनभिन्ने
र्थेषः निष्टपति

पदादेःसातिप्रत्ययस्यचषत्वम् न

दधिसिञ्चति – अग्निसात्करोति

सिच् धातोस्सस्य यङि नषत्वम्
निसेसिच्यते· प्रतिस्तब्धनिस्तब्धशब्दयोर्नषत्वम्।
प्रतिस्तब्धः निस्तब्धः स्तनोत्यादित्वात्प्राप्तम् षत्वं न भवति
चङि परे· स्तम्भ, सिवु· सह धातूनां न षत्वम्
अवातस्तम्भत्· पर्यसीषिवत्· न्यसीषहत
स्यसनि च· परे स्तनोतेः षत्वं न
विसोष्यति: अभिसुसूषति
सदेरभ्यासात्परस्य लिटि षत्वं न
निषसाद· स्यादित्वात्प्राप्तम्। निषिध्यते।

## अथ णत्वविधानम्

ऋरषेभ्यो नस्य णः स्याच् हयकवर्गपवर्ग अनुस्वारव्यवधा
नेपि स्यात् पदान्ते न
ऋ यथा नृणाम् नॄणाम् मातॄणाम्
र यथा चतुर्णाम्   सुपर्णः
ष यथा पूष्णः   पदान्ते रामान् अत्र न
व्यवधाने करणं· कारणम्· गृहेण· रामेण· गर्वेण· अर्केण·
दर्पेण  समासे तु न छन्दसि ऋकारान्तपदाद्वा  रामनाम
गंधर्वगानम्। नृमणः पितृपाणम्
संज्ञाविषये गकारभिन्न स्याच् हयकवर्गादिव्यवधाने ऽव्यव
धाने च पूर्वपदस्थान्निमित्तादुत्तर पदस्थस्यापि नस्य णत्व
म् उपसर्गान्तु बहुलं नसशब्दस्य यथा द्रुणसः खुरणाः·
खुरणसः· खरणाः खरणसः प्रणसः इत्यादि

संज्ञायां वन शब्दस्योत्तर पदस्यणत्वं नार्ह्रियुग्रामादिभ्यएव
तेचयथा पुरगावणम्- मिश्रकावणम्- मिध्रकावणम् सा
रिकावणम् कोटरावणम् अग्रेवणम् वनस्याग्रे इतिविग्रहः
राजदंतादित्वादग्रेशब्दस्यपूर्वनिपातस्सप्तम्याश्चालुक्निपातनादेव
प्रादिभ्यस्त्वसंज्ञायामपि
तेयथा प्रवणम्निर्वणम् अन्तर्वणम् शारवणम् इक्षुवण
म् प्लक्षवणम् आम्रवणम् कार्ष्यवणम् खदिरवणम्
पीयूक्षावणम्
ओषधिवनस्पतिवाचिसनिमित्तपूर्वपदेभ्योविकल्पेन
ओषध्यःफलपाकान्तास्स्वदितेरेवनस्पतयः उद्भिज्जाज्ञेयाः।
दूर्वावणम् दूर्वावनम् शिरीषवणम् शिरीषवनम्।
चन्तरादिस्वरवच्छब्देभ्य इरिकादिभ्यश्चनणत्वम्
देवदारुवनम् इरिकावनम् मिरिकावनम् तिमिरावनम्
अदन्तपूर्वपदस्थाद्रेफादह्नादेशस्यनस्यणः
सर्वाह्णः पूर्वाह्णः पराह्णः उत्तराह्णः अपराह्णः
आरोप्यमानीयमानवाचिनः सनिमित्तात्पूर्वपदाद्वाहनन
कारस्यणः।
इक्षुवाहणम् शारवाहणम् खदिरवाहणम् पञ्जरवा
हणम् नेह इन्द्रवाहनम्।
देशेवाच्ये पूर्वपदस्थान्निमित्तात्पान शब्दस्यनस्यणः
भावकरणयोस्तुवा
क्षीरपाणाः उशीनराः सुरापाणाःप्राच्याः पीयन्ते इति
पानमितिकर्म्मव्युत्पत्तिरत्रज्ञेयाभावेकरणेच क्षीरपाणम्
क्षीरपानम् सुरापाणम् सुरापानमितिविकल्पः
पूर्वपदनिमित्तात्प्रातिपदकान्तनुम् विभक्तिस्थस्यापिवा।

यथा माषवापिणौ· व्रीहिवापाणी· माषवापेण· पक्षे माष
वापिनावित्यादि प्रहिण्वति· उत्तरपदं यस्मात्प्रातिपदिकं तदं
न्तस्यैव नस्यणत्वम् नेह· गर्गाणांभगिनी गर्गभगिनी

युवादेःत्वम्नादेश्च न

रम्ययूना· परिपक्वानि· प्रेन्वन्· त्वम्नाति· त्वसोति

एकाजुत्तरपदे कवर्गवत्युत्तरपदे च प्रातिपदिकान्ता
दिस्थनस्य नित्यं णः

वृत्रहणौ· हरिमाणी· क्षीरपाणी· क्षीरपेण· रम्यविणा
हरिकामिणौ· हरिकामाणी· हरिकामेण

पदव्यवधाने णत्वम् षान्तस्य नशेश्च तथा

माषकुम्भवापेन· चतुरंगयोगेन· नहिनेन भवति· आ
द्रगोमयेण शुष्कगोमयेण· प्रनंष्टा· प्रनंक्ष्यति
उपसर्गनिमित्तात्परे पदे णस्य धातोर्नस्य णत्वम् गदादि
षूपसर्गस्थनिमित्तान्नेर्णत्वञ्च।
प्रणदति· प्रणमति· परिणदति· अन्तर्णदति· अन्तर्णु
हाति· पराणौति· प्रणश्यति· प्रणिनदति· प्रणिपतति·
प्रणिपद्यते· प्रणिददाति· प्रणिदधाति· प्रणिमाति· प्र
णिद्यति· प्रणिहंति· प्रणियाति· प्रणिवाति· प्रणिद्राति
प्रणिप्साति· प्रणिवपति· प्रणिवहति· प्रणिशाम्यति·
प्रणिचिनोति· प्रणिदोग्धीति·
उपदेशे कादिखादिषान्तभिन्ने गदादेरस्मिन् परे नेर्णत्वं
वा स्यात्
प्रणिभवति· प्रनिभवति· प्रणिवदति· प्रनिवदति· इ
त्यादि।
उपसर्गस्थनिमित्तादन्धातोर्नस्य पदान्तेऽपदान्तेऽपि ण

न्नेस्यात्

प्राणिति हे प्राण। प्राणिता· प्राणिष्यति· प्राणितु· प्राण्यात्।

अभ्यासवतोधातोरुभौनकारौणत्वंलभेते

प्राणीणत्· प्राणिणिषति· प्राणिणिषिष्यति

अपूर्वस्यहन्तेर्नस्यणत्वंवमयोःपरतोवा· उपसर्गस्यनिमित्तात्

अन्तःशब्दादपिदेशाभिन्नेवाच्येऽस्यणत्वम्

प्रहण्यात्· प्रहण्मि· प्रहन्मि· प्रहण्वः प्रहन्वः अन्तर्हणनम्।

देशेतु अन्तर्हननोदेशः ह्रस्वाकारपूर्वत्वमत्रसर्वत्रविवक्षितम्।

नेह· प्रघ्नन्ति· अन्तर्घ्नन्ति· अन्तरघ्नानि· प्राघ्नानि इत्यादि।

अन्तःशब्दादयनशब्दस्यापिपूर्ववत्

अन्तरयणम् देशेतु अन्तरयनोदेशः

उपसर्गस्यनिमित्तादजन्तरस्यकृत्स्थनकारस्यणत्वं निर्विण्णशब्देऽपि

प्रयाणीयम्· निर्विण्णः· अजन्तरस्यकिम्· प्रमग्नः

णयन्ताद्विहितस्यविकल्पेन

प्रयापणीयम्· प्रयापनीयम्· णयन्तविहिताभावात्

प्रयास्यमाणम् प्रयापनित्य

णत्वेषत्वेच दुर् उपसर्गोनेन

दुर्यानम्· दुर्यापनम्· एवंदुर्नदति· दुर्निन्दति इत्यादि

हलादेरकारभिन्नस्वरोपधाद्विहितकृत्स्थनस्य णोवासानुस्वारस्यचेन्नहि इजादेर्हलन्ताद्विहितस्यैव

प्रकोपणीयम्· प्रकोपनीयम् इजुपधात्किम्· प्रोम्भणम्

प्रवपणीयम्
प्रेवणीयम्

प्रवृंणीयम् प्रेह्व·णीयम् इत्यादेः किम्· प्रमंगनीयम्
प्रोम्भणम्
मगिसर्पणे धातुः

निंस निंक्ष निन्दा वा

प्रणिंसितव्यम्· प्रनिंसितव्यम्· प्रणीक्षितव्यम्· प्र
निक्षितव्यं प्रणिन्दितव्यम्· प्रनिन्दितव्यम्

ण्यांभांभूपूतन् कमिगमिप्यायीवेपृभ्यः परस्य कृत्यस्य
णो न

प्रभानीयम्· प्रभवनीयम्· प्रपवनीयम्· इउ·क्तम प्र
पवणीयः सोमः प्रकमनीयः· प्रगमनीयः· प्रप्याय
नीयः प्रवेपनीयम् प्रव्यापणीयं प्रव्यापनीयम्
ण्यन्तेभ्य एभ्योप्येवम्· प्रभापनीयम्· प्रभावनीयम्·
प्रपावनीयम्· इत्यादि।

पदान्तषकारान्तस्य णो न·

निष्पानम्· सर्पिष्पानम्· षान्त् किं निर्णयः· पदान्ता
त् किं पुष्णाति· पदे अन्तः पदान्तः इति सप्तमी समासा
त् क्षुसर्पिष्केण अत्र णत्वं भवत्येव

संदर्श्य संधिविषयं नियमान् षत्वणत्वयोः
शब्दाश्चाग्रे प्रदर्श्यन्ते लिंगै रकत्रचत्रिभिः

| विभक्तयः | पुंसि | पुंसि | स्त्रियाम् | स्त्रियाम् | नपुंसके | नपुंसके |
|---|---|---|---|---|---|---|
| प्र॰ | अः | रामः | आ | गंगा | अम् | फलम् |
| | औ | रामौ | ए | गंगे | ए | फले |
| | आः | रामाः | आः | गंगाः | आनि | फलानि |
| सं॰ | हे अ | हे राम | हे ए | हे गंगे | हे अ | हे फल |
| | हे औ | हे रामौ | हे ए | हे गंगे | हे ए | हे फले |
| | हे आः | हे रामाः | हे आः | हे गंगाः | हे आनि | हे फलानि |
| द्वि॰ | अम् | रामम् | आम् | गंगाम् | अम् | फलम् |
| | औ | रामौ | ए | गंगे | ए | फले |
| | आन् | रामान् | आः | गंगाः | आनि | फलानि |
| तृ॰ | एन | रामेण | आया | गंगया | एन | फलेन |
| | आभ्याम् | रामाभ्याम् | आभ्याम् | गंगाभ्याम् | आभ्याम् | फलाभ्याम् |
| | ऐः | रामैः | आभिः | गंगाभिः | ऐः | फलैः |
| च॰ | आय | रामाय | आयै | गंगायै | आय | फलाय |
| | आभ्याम् | रामाभ्याम् | आभ्याम् | गंगाभ्याम् | आभ्याम् | फलाभ्याम् |
| | एभ्यः | रामेभ्यः | आभ्यः | गंगाभ्यः | एभ्यः | फलेभ्यः |
| पं॰ | आत् | रामात् | आयाः | गंगायाः | आत् | फलात् |
| | आभ्याम् | रामाभ्याम् | आभ्याम् | गंगाभ्याम् | आभ्याम् | फलाभ्याम् |
| | एभ्यः | रामेभ्यः | आभ्यः | गंगाभ्यः | एभ्यः | फलेभ्यः |
| ष॰ | अस्य | रामस्य | आयाः | गंगायाः | अस्य | फलस्य |
| | अयोः | रामयोः | अयोः | गंगयोः | अयोः | फलयोः |
| | आनाम् | रामाणाम् | आनाम् | गंगानाम् | आनाम् | फलानाम् |
| स॰ | ए | रामे | आयाम् | गंगायाम् | ए | फले |
| | अयोः | रामयोः | अयोः | गंगयोः | अयोः | फलयोः |
| | एषु | रामेषु[१] | आसु | गंगासु[२] | एषु | फलेषु[३] |

(१) एवं कृष्णशिवदेववृक्षपठादयः अकारान्ताः पुंल्लिङ्गाः (२) एवं रमादुर्गा उमामालालतादयः आकारान्ताः स्त्रीलिङ्गाः अंबा अक्का अल्ला शब्दा गंगावत् हे अंब हे अक्क हे अल्ल इति विशेषः (३) एवं धनवनपुष्पकुलादयः नपुंसकलिङ्गाः

| | पुं. | स्त्री. | नपुं. |
|---|---|---|---|
| प्र. | शुक्लः | शुक्ला | शुक्लम् |
| | शुक्लौ | शुक्ले | शुक्ले |
| | शुक्लाः | शुक्लाः | शुक्लानि |
| सं. | हे शुक्ल | हे शुक्ले | हे शुक्ल |
| | हे शुक्लौ | हे शुक्ले | हे शुक्ले |
| | हे शुक्लाः | हे शुक्लाः | हे शुक्लानि |
| द्वि. | शुक्लं | शुक्लां | शुक्लम् |
| | शुक्लौ | शुक्ले | शुक्ले |
| | शुक्लान् | शुक्लाः | शुक्लानि |
| तृ. | शुक्लेन | शुक्लया | शुक्लेन |
| | शुक्लाभ्यां | शुक्लाभ्याम् | शुक्लाभ्याम् |
| | शुक्लैः | शुक्लाभिः | शुक्लैः |
| च. | शुक्लाय | शुक्लायै | शुक्लाय |
| | शुक्लाभ्यां | शुक्लाभ्यां | शुक्लाभ्याम् |
| | शुक्लेभ्यः | शुक्लाभ्यः | शुक्लेभ्यः |
| पं. | शुक्लात् | शुक्लायाः | शुक्लात् |
| | शुक्लाभ्यां | शुक्लाभ्यां | शुक्लाभ्याम् |
| | शुक्लेभ्यः | शुक्लाभ्यः | शुक्लेभ्यः |
| ष. | शुक्लस्य | शुक्लायाः | शुक्लस्य |
| | शुक्लयोः | शुक्लयोः | शुक्लयोः |
| | शुक्लानाम् | शुक्लानाम् | शुक्लानाम् |
| स. | शुक्ले | शुक्लायां | शुक्ले |
| | शुक्लयोः | शुक्लयोः | शुक्लयोः |
| | शुक्लेषु | शुक्लासु | शुक्लेषु |

| | पुम् | स्त्री॰ | नपुं॰ |
|---|---|---|---|
| प्र॰ | सर्वः | सर्वा | सर्वम् |
| | सर्वौ | सर्वे | सर्वे |
| | सर्वे | सर्वाः | सर्वाणि |
| सं॰ | हे सर्व | हे सर्वे | हे सर्व |
| | हे सर्वौ | हे सर्वे | हे सर्वे |
| | हे सर्वे | हे सर्वाः | हे सर्वाणि |
| द्वि॰ | सर्वम् | सर्वाम् | सर्वं |
| | सर्वौ | सर्वे | सर्वे |
| | सर्वान् | सर्वाः | सर्वाणि |
| तृ॰ | सर्वेण | सर्वया | सर्वेण |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वैः | सर्वाभिः | सर्वैः |
| च॰ | सर्वस्मै | सर्वस्यै | सर्वस्मै |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वेभ्यः | सर्वाभ्यः | सर्वेभ्यः |
| पं॰ | सर्वस्मात् | सर्वस्याः | सर्वस्मात् |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वेभ्यः | सर्वाभ्यः | सर्वेभ्यः |
| ष॰ | सर्वस्य | सर्वस्याः | सर्वस्य |
| | सर्वयोः | सर्वयोः | सर्वयोः |
| | सर्वेषाम् | सर्वासाम् | सर्वेषाम् |
| स॰ | सर्वस्मिन् | सर्वस्याम् | सर्वस्मिन् |
| | सर्वयोः | सर्वयोः | सर्वयोः |
| | (१) सर्वेषु | (२) सर्वासु | (३) सर्वेषु |

पुं (१) कस्यचित्नामवाचकः सर्वशब्दः रामवत् सर्वाय सर्वान् इत्यादि ।
स्त्री (२) नामवाचकत्वे सर्वाशब्दः रमावत् ॥
नपुं (३) सर्वादीनामपि कस्यचित् नामवाचकत्वे पूर्वायेत्येवमस्मात् ॥

| | पुं· | स्त्री· | नपुं· |
|---|---|---|---|
| प्र· | सर्वः | सर्वा | सर्वम् |
| | सर्वौ | सर्वे | सर्वे |
| | सर्वे सर्वाः | सर्वाः | सर्वाणि |
| सं· | हे सर्व | हे सर्वे | हे सर्व |
| | हे सर्वौ | हे सर्वे | हे सर्वे |
| | हे सर्वे हे सर्वाः | हे सर्वाः | हे सर्वाणि |
| द्वि· | सर्वम् | सर्वाम् | सर्वम् |
| | सर्वौ | सर्वे | सर्वे |
| | सर्वान् | सर्वाः | सर्वाणि |
| तृ· | सर्वेण | सर्वया | सर्वेण |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वैः | सर्वाभिः | सर्वैः |
| च· | सर्वस्मै | सर्वस्यै | सर्वस्मै |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वेभ्यः | सर्वाभ्यः | सर्वेभ्यः |
| पं· | सर्वस्मात्। सर्वात् | सर्वस्याः सर्वायाः | सर्वस्मात्। सर्वात् |
| | सर्वाभ्याम् | सर्वाभ्याम् | सर्वाभ्याम् |
| | सर्वेभ्यः | सर्वाभ्यः | सर्वेभ्यः |
| ष· | सर्वस्य | सर्वस्याः | सर्वस्य |
| | सर्वयोः | सर्वयोः | सर्वयोः |
| | सर्वेषाम् | सर्वासाम् | सर्वेषाम् |
| स· | सर्वस्मिन्। सर्वे | सर्वस्याम् | सर्वस्मिन्। सर्वे |
| | सर्वयोः | सर्वयोः | सर्वयोः |
| | सर्वेषु | सर्वासु | सर्वेषु |

सर्व· पर· अवर· दक्षिण· उत्तर· अपर अधर स्व· अन्तर· एतेषां नवानां सर्ववत्सर्वाणिरूपाणि प्रथमाबहुवचने पंचमीसप्तम्योश्चैकवचने पक्षे रामवत् रूपाणि ॥

| | पुम् | स्त्री॰ | नपुं॰ |
|---|---|---|---|
| प्र॰ | द्वितीयः | द्वितीया | द्वितीयं |
| | द्वितीयौ | द्वितीये | द्वितीये |
| | द्वितीयाः | द्वितीयाः | द्वितीयानि |
| सं॰ | हे द्वितीय | हे द्वितीये | हे द्वितीय |
| | हे द्वितीयौ | हे द्वितीये | हे द्वितीये |
| | हे द्वितीयाः | हे द्वितीयाः | हे द्वितीयानि |
| द्वि॰ | द्वितीयं | द्वितीयाम् | द्वितीयं |
| | द्वितीयौ | द्वितीये | द्वितीये |
| | द्वितीयान् | द्वितीयाः | द्वितीयानि |
| तृ॰ | द्वितीयेन | द्वितीयया | द्वितीयेन |
| | द्वितीयाभ्याम् | द्वितीयाभ्याम् | द्वितीयाभ्याम् |
| | द्वितीयैः | द्वितीयाभिः | द्वितीयैः |
| च॰ | द्वितीयस्मै॰द्वितीयाय | द्वितीयस्यै।द्वितीयायै | द्वितीयस्मै॰द्वितीयाय |
| | द्वितीयाभ्याम् | द्वितीयाभ्याम् | द्वितीयाभ्याम् |
| | द्वितीयेभ्यः | द्वितीयाभ्यः | द्वितीयेभ्यः |
| पं॰ | द्वितीयस्मात्॰द्वितीयात् | द्वितीयस्याः द्वितीयायाः | द्वितीयस्मात्॰द्वितीयात् |
| | द्वितीयाभ्याम् | द्वितीयाभ्याम् | द्वितीयाभ्याम् |
| | द्वितीयेभ्यः | द्वितीयाभ्यः | द्वितीयेभ्यः |
| ष॰ | द्वितीयस्य | द्वितीयस्याः | द्वितीयस्य |
| | द्वितीययोः | द्वितीययोः | द्वितीययोः |
| | द्वितीयानाम् | द्वितीयानाम् | द्वितीयानाम् |
| स॰ | द्वितीयस्मिन्। द्वितीये | द्वितीयस्याम्। द्वितीयायाम् | द्वितीयस्मिन्॰ द्वितीये |
| | द्वितीययोः | द्वितीययोः | द्वितीययोः |
| | द्वितीयेषु | द्वितीयासु | द्वितीयेषु |

एवंतृतीयः एवंतृतीया एवंतृतीयम्

प्रथम चरम अल्प अर्द्ध कतिपय नेम एतेषां तयान्तानां च प्रथमायाः बहुवचने प्रथमे प्रथमाः इत्यादिपूर्ववत्रामवत् ॥

उभशब्दोनित्यंद्विवचनान्तः त्रिलिङ्गः

| | पु. | | पु. | स्त्री. | नपुं. |
|---|---|---|---|---|---|
| प्र. | उभौ | १ | उभयः | उभया | उभयं |
| सं. | हे उभौ | | उभयौ | उभये | उभये |
| द्वि | उभौ | | उभये | उभयाः | उभयानि |
| तृ. | उभाभ्याम् | १ | हे उभय | हे उभये | हे उभय |
| च. | उभाभ्याम् | | हे उभयौ | हे उभये | हे उभये |
| पं. | उभाभ्याम् | | हे उभये | हे उभयाः | हे उभयानि |
| ष. | उभयोः | २ | उभयं | उभयाम् | उभयम् |
| स. | उभयोः | | उभयौ | उभये | उभये |
| | स्त्री. | | | | |
| प्र. | उभे | | उभयान् | उभयाः | उभयानि |
| सं. | हे उभे | ३ | उभयेन | उभयया | उभयेन |
| द्वि. | उभे | | उभयाभ्याम् | उभयाभ्याम् | उभयाभ्याम् |
| तृ. | उभाभ्याम् | | उभयैः | उभयाभिः | उभयैः |
| च. | उभाभ्याम् | ४ | उभयस्मै | उभयस्यै | उभयस्मै |
| पं. | उभाभ्याम् | | उभयाभ्याम् | उभयाभ्याम् | उभयाभ्याम् |
| ष. | उभयोः | | उभयेभ्यः | उभयाभ्यः | उभयेभ्यः |
| स. | उभयोः | ५ | उभयस्मात् | उभयस्याः | उभयस्मात् |
| | नपुं. | | | | |
| प्र. | उभे | | उभयाभ्याम् | उभयाभ्याम् | उभयाभ्याम् |
| सं. | हे उभे | | उभयेभ्यः | उभयाभ्यः | उभयेभ्यः |
| द्वि | उभे | ६ | उभयस्य | उभयस्याः | उभयस्य |
| तृ. | उभाभ्याम् | | उभययोः | उभययोः | उभययोः |
| च. | उभाभ्याम् | | उभयेषाम् | उभयासाम् | उभयेषाम् |
| पं. | उभाभ्याम् | ७ | उभयस्मिन् | उभयस्याम् | उभयस्मिन् |
| ष. | उभयोः | | उभययोः | उभययोः | उभययोः |
| स. | उभयोः | | उभयेषु | उभयासु | उभयेषु |

| पदादिषोडशानां पदादय आदेशाः विकल्पेन द्वितीयाबहुवचनान्ता | | | | | | | |
|---|---|---|---|---|---|---|---|
| पाद<br>पद् | दन्त<br>दत् | यूष<br>यूषन् | निशा<br>निश् | पृतना<br>पृत् | मास<br>मास् | आस्य<br>आसन् | सानु<br>स्नु |

| | पुं. | | पुं. | |
|---|---|---|---|---|
| प्र. | पादः सं. | हे पाद | दंतः सं. | हे दन्त |
| | पादौ | हे पादौ | दंतौ | हे दंतौ |
| | पादाः | हे पादाः | दंताः | हे दंताः |
| द्वि. | पादं | | दंतम् | |
| | पादौ | | दंतौ | |
| | पादान् | पदः | दंतान् | दतः |
| तृ. | पादेन | पदा | दंतेन | दता |
| | पादाभ्याम् | पद्भ्याम् | दन्ताभ्याम् | दद्भ्याम् |
| | पादैः | पद्भिः | दन्तैः | दद्भिः |
| च. | पादाय | पदे | दन्ताय | दते |
| | पादाभ्याम् | पद्भ्याम् | दंताभ्याम् | दद्भ्याम् |
| | पादेभ्यः | पद्भ्यः | दंतेभ्यः | दद्भ्यः |
| पं. | पादात्-द् | पदः | दंतात्-द् | दतः |
| | पादाभ्याम् | पद्भ्याम् | दंताभ्यां | दद्भ्याम् |
| | पादेभ्यः | पद्भ्यः | दंतेभ्यः | दद्भ्यः |
| ष. | पादस्य | पदः | दंतस्य | दतः |
| | पादयोः | पदोः | दंतयोः | दतोः |
| | पादानाम् | पदाम् | दंतानाम् | दताम् |
| स. | पादे | पदि | दंते | दति |
| | पादयोः | पदोः | दंतयोः | दतोः |
| | पादेषु | पत्सु | दंतेषु | दत्सु |

ततश्चारभ्यभवति

| दोष | शीर्ष | शकृत् | यकृत् | असृक् | हृदय | उदक | नासिका |
|---|---|---|---|---|---|---|---|
| दोषन् | शीर्षन् | शकन् | यकन् | असन् | हृद् | उदन् | नस् |

| | पुं. | | स्त्री. | |
|---|---|---|---|---|
| प्र. | यूषः | सं. हे यूष | निशा | सं. हे निशे |
| | यूषौ | हे यूषौ | निशे | हे निशे |
| | यूषाः | हे यूषाः | निशाः | हे निशाः |
| द्वि. | यूषं | | निशां | |
| | यूषौ | | निशे | |
| | यूषान् | यूष्णः | निशाः | निशः |
| तृ. | यूषेन | यूष्णा | निशया | निशा |
| | यूषाभ्याम् | यूषभ्याम् | निशाभ्यां | निज्भ्याम् निड्भ्याम् |
| | यूषैः | यूषभिः | निशाभिः | निज्भिः निड्भिः |
| च. | यूषाय | यूष्णो | निशायै | निशे |
| | यूषाभ्याम् | यूषभ्याम् | निशाभ्यां | निज्भ्याम्· निड्भ्याम् |
| | यूषेभ्यः | यूषभ्यः | निशाभ्यः | निज्भ्यः निड्भ्यः |
| पं. | यूषात्·द् | यूष्णः | निशायाः | निशः |
| | यूषाभ्याम् | यूषभ्याम् | निशाभ्यां | निज्भ्याम् निड्भ्याम् |
| | यूषेभ्यः | यूषभ्यः | निशाभ्यः | निज्भ्यः निड्भ्यः |
| ष. | यूषस्य | यूष्णः | निशायाः | निशः |
| | यूषयोः | यूष्णोः | निशयोः | निशोः |
| | यूषाणाम् | यूष्णाम् | निशानाम् | निशाम् |
| स. | यूषे | यूष्णि | निशायाम् | निशि |
| | यूषयोः | यूष्णोः | निशयोः | निशोः |
| | यूषेषु | यूषसु | निशासु | निट्सु निट्त्सु |

| | स्त्री· | | पुं· | |
|---|---|---|---|---|
| प्र· | पृतना | हे पृतने | मासः | हे मास |
| | पृतने | हे पृतने | मासौ | हे मासौ |
| | पृतनाः | हे पृतनाः | मासाः | हे मासाः |
| द्वि· | पृतनां | | मासम् | |
| | पृतने | | मासौ | |
| | पृतनाः | पृतः | मासान् | मासः |
| तृ· | पृतनया | पृता | मासेन | मासा |
| | पृतनाभ्याम् | पृद्भ्याम् | मासाभ्याम् | माभ्याम् |
| | पृतनाभिः | पृद्भिः | मासैः | माभिः |
| च· | पृतनायै | पृते | मासाय | मासे |
| | पृतनाभ्याम् | पृद्भ्याम् | मासाभ्याम् | माभ्याम् |
| | पृतनाभ्यः | पृद्भ्यः | मासेभ्यः | माभ्यः |
| पं· | पृतनायाः | पृतः | मासात् द् | मासः |
| | पृतनाभ्याम् | पृद्भ्याम् | मासाभ्याम् | माभ्याम् |
| | पृतनाभ्यः | पृद्भ्यः | मासेभ्यः | माभ्यः |
| ष· | पृतनायाः | पृतः | मासस्य | मासः |
| | पृतनयोः | पृतोः | मासयोः | मासोः |
| | पृतनानाम् | पृताम् | मासानाम् | मासाम् |
| स· | पृतनायां | पृति | मासे | मासि |
| | पृतनयोः | पृतोः | मासयोः | मासोः |
| | पृतनासु | पृत्सु | मासेषु | माःसु<br>मास्सु |

| | नपुं. | | पुं. | |
|---|---|---|---|---|
| प्र. | आस्यम् सं. | हे आस्य | सानुः सं. | हे सानो |
| | आस्ये | हे आस्ये | सानू | हे सानू |
| | आस्यानि | हे आस्यानि | सानवः | हे सानवः |
| द्वि. | आस्यम् | | सानुम् | |
| | आस्ये | | सानू | |
| | आस्यानि | आस्नः | सानून् | स्नून् |
| तृ. | आस्येन | आस्ना | सानुना | स्नुना |
| | आस्याभ्याम् | आसभ्याम् | सानुभ्याम् | स्नुभ्याम् |
| | आस्यैः | आसभिः | सानुभिः | स्नुभिः |
| च. | आस्याय | आस्ने | सानवे | स्नवे |
| | आस्याभ्याम् | आसभ्याम् | सानुभ्याम् | स्नुभ्याम् |
| | आस्येभ्यः | आसभ्यः | सानुभ्यः | स्नुभ्यः |
| पं. | आस्यात् | आस्नः | सानोः | स्नोः |
| | आस्याभ्याम् | आसभ्याम् | सानुभ्याम् | स्नुभ्याम् |
| | आस्येभ्यः | आसभ्यः | सानुभ्यः | स्नुभ्यः |
| ष. | आस्यस्य | आस्नः | सानोः | स्नोः |
| | आस्ययोः | आस्नोः | सान्वोः | स्न्वोः |
| | आस्यानाम् | आस्नाम् | सानूनाम् | स्नूनाम् |
| स. | आस्ये | आस्नि | सानौ | स्नौ |
| | आस्ययोः | आस्नोः | सान्वोः | स्न्वोः |
| | आस्येषु | आससु | सानुषु | स्नुषु |

| | पुं· | | नपुं· | |
|---|---|---|---|---|
| प्र· | दोषः | हे दोष | शीर्षम् | हे शीर्ष |
| | दोषौ | हे दोषौ | शीर्षे | हे शीर्षे |
| | दोषाः | हे दोषाः | शीर्षाणि | हे शीर्षाणि |
| द्वि· | दोषम् | | शीर्षम् | |
| | दोषौ | | शीर्षे | |
| | दोषान् | दोष्णः | शीर्षाणि | शीर्ष्णः |
| तृ· | दोषेन | दोष्णा | शीर्षेण | शीर्ष्णा |
| | दोषाभ्याम् | दोषभ्याम् | शीर्षाभ्याम् | शीर्षभ्याम् |
| | दोषैः | दोषभिः | शीर्षैः | शीर्षभिः |
| च· | दोषाय | दोष्णे | शीर्षाय | शीर्ष्णे |
| | दोषाभ्याम् | दोषभ्याम् | शीर्षाभ्याम् | शीर्षभ्याम् |
| | दोषेभ्यः | दोषभ्यः | शीर्षेभ्यः | शीर्षभ्यः |
| पं· | दोषात् | दोष्णः | शीर्षात् | शीर्ष्णः |
| | दोषाभ्याम् | दोषभ्याम् | शीर्षाभ्याम् | शीर्षभ्याम् |
| | दोषेभ्यः | दोषभ्यः | शीर्षेभ्यः | शीर्षभ्यः |
| ष· | दोषस्य | दोष्णः | शीर्षस्य | शीर्ष्णः |
| | दोषयोः | दोष्णोः | शीर्षयोः | शीर्ष्णोः |
| | दोषाणाम् | दोष्णाम् | शीर्षाणाम् | शीर्ष्णाम् |
| स· | दोषे | दोष्णि·दोषणि | शीर्षे | शीर्ष्णि शीर्षणि |
| | दोषयोः | दोष्णोः | शीर्षयोः | शीर्ष्णोः |
| | दोषेषु | दोषसु | शीर्षेषु | शीर्षसु |

स्त्रियांशाकृत्विशेषा — नपुंसकलिंगे

यकृत्शब्दःउदरस्थांगविशेषःनहर्दे कोरोगस्य

| | | | | |
|---|---|---|---|---|
| प्र· | शाकृत् | हेशाकृत् | यकृत् | हेयकृत् |
| | शाकृतौ | हेशाकृतौ | यकृती | हेयकृती |
| | शाकृतः | हेशाकृतः | यकृंति | हेयकृंति |
| द्वि· | शाकृतम् | | यकृत् | |
| | शाकृतौ | | यकृती | |
| | शाकृतः | शाक्नः | यकृंति | यकानि |
| तृ· | शाकृता | शाक्ना | यकृता | यक्ना |
| | शाकृद्भ्याम् | शाकभ्याम् | यकृद्भ्याम् | यकभ्याम् |
| | शाकृद्भिः | शाकभिः | यकृद्भिः | यकभिः |
| च· | शाकृते | शाक्ने | यकृते | यक्ने |
| | शाकृद्भ्याम् | शाकभ्याम् | यकृद्भ्याम् | यकभ्याम् |
| | शाकृद्भ्यः | शाकभ्यः | यकृद्भ्यः | यकभ्यः |
| पं· | शाकृतः | शाक्नः | यकृतः | यक्नः |
| | शाकृद्भ्याम् | शाकभ्याम् | यकृद्भ्याम् | यकभ्याम् |
| | शाकृद्भ्यः | शाकभ्यः | यकृद्भ्यः | यकभ्यः |
| ष· | शाकृतः | शाक्नः | यकृतः | यक्नः |
| | शाकृतोः | शाक्नोः | यकृतोः | यक्नोः |
| | शाकृताम् | शाक्नाम् | यकृताम् | यक्नाम् |
| स· | शाकृति | शाक्नि· शाकनि | यकृति | यक्नि यकनि |
| | शाकृतोः | शाक्नोः | यकृतोः | यक्नोः |
| | शाकृत्सु | शाकसु | यकृत्सु | यकसु |

क्रियाप्रयोजकः कर्त्ता तच्चास्मिन्प्रथमाभवेत् तृतीयावाप्यतु
क्तेस्यादेतदेवनचान्यथा ९ ग्रामंगच्छतिपांथोयंपांथे
गतिनिषेत्कृता तिङ्ाद्यभिहितःपांथः वचनंचक्रियासमं
१० कर्त्तर्यभिहितेज्ञेयाविभक्तिःप्रथमासदा तिङाभि
हितकर्म्मस्याविभक्तिःप्रथमातथा ११ ओदनःपच्यतेतेन
तृतीयाकर्तृगात्रतु पचतीत्यत्रचोक्तत्वंकर्त्तुरस्तिविवक्षया
१२ आकांतावशतोमुख्योभिहितत्वंभवेत्तिङा प्रउक्तेक
थितत्वंचाभिहितत्वंतदेवहि १३ पच्यतेपचतीत्यत्रमुख्य
त्वंकर्म्मकर्तृगं यकृशब्भ्यांतिङ्विशिष्टाभ्यांबुध्यतेगौणता
न्यथा १४ पचतीत्यत्रकःकिंचपच्यतेकिंचकेनच आकां
तामुख्यगोणस्यास्यात्क्रमात्कर्तृकर्म्मणोः १५ कर्तृप्रधा
नतास्थानेकर्त्तुःसंख्यातिङासमा कर्म्मप्रधानतायांचक
र्म्मसंख्यापितत्समा १६ कर्तृप्रधानकेस्थानेकर्म्मसंख्या
यथोचिता कर्म्मप्रधानकेस्थानेकर्त्तुःसंख्यायथेप्सिता १७
उक्तेकर्त्तरिसंख्यातुतिङःकर्त्तुर्द्वयोःसमा चैत्रःपचतिमा
साच्चंपचतस्तौपचंतिते १८ तथासंख्याकर्म्मणस्याज्ज्ञेया
कर्म्मक्रियापदे मूलकंपच्यतेतेनपच्येतेमूलकेतथा १९
मूलकानिचपच्यंतेकर्त्तुःसंख्यात्वपेक्षया कृदन्तेषष्ठिका
ज्ञेया नभिहितेतुकर्त्तरि २० परलोकहितस्यस्यातप
रलोकहितेनवा सेवितव्यःसदाधर्म्मःपुरुषेणनरस्यच
२१ अनुक्तेकर्म्मणीज्ञेयाःषष्ठीद्विविचतुर्थिकाः कटस्य
कारकःकारुःषष्ठ्यत्रानुक्तकर्म्मणि २२ ग्रामंगच्छत्यनुक्ते
तुद्वितीयाकर्म्मणीरिता संजानीतेतुपुत्रेणतृतीयाचप्रकी
र्त्तिता २२ ग्रामायव्रजतीत्यत्रतुर्यिकानुक्तकर्म्मगा अ
ध्वभिन्नेतुगत्यर्थेकर्म्मणीद्वेविभक्तिके २३ द्वितीयाचचतु

र्थीचग्रामंग्रामायवाव्रजेत् क्रियायोगेप्ययोगेपिप्रथमावच
नानिच २४ राजानदीजलंस्तेषुप्रथमैवक्रियानदि त्र
यः कालाः प्रयोगेतुक्रियानाद्दक्प्रदीयताम् २५ सम्बो
धनेचद्देभोभ्यांज्ञायतेप्रथमैवहि
अथभावविचारः धात्वर्थस्त्वत्रभावोस्तिभवनेभावएव
वा २६ धात्वर्थएवभावाख्योकर्मकस्यलगोभवेत्
तिङ्वाच्यभावनायास्तुसत्त्वरूपतयास्थितेः २७ भाव
वाचितिङन्तेतुस्यादेकत्वंचसर्वदा द्वित्वाद्यप्रत्ययाच्चा
पिभाष्यादेकत्वमिष्यते २८ घटेनभूयतेगेहे घटाभ्यां
भूयतेतथा घटैस्तुभूयतेत्येवं द्वित्वाद्यंनक्रियागतम् २९
कर्त्रादीनांतुयत्रस्यात्सामानाधिकरण्यकम् लकारार्थे
नतत्रैवस्यात्कर्त्रादिगताचया ३० संख्यातद्बोधकंचस्या
दाख्यातमितिनिश्चयः सामानाधिकरण्यंचतत्कर्त्रादिनिरू
पितम् ३१ लकारार्थेनतोभावेदृश्यतेयतएवहि त
स्मादाख्यातगेभावेनैवद्वित्वादिकंभवेत् ३२।

## अथकर्तृकर्मक्रियाविचारः

कार्य्यादीनांयथोत्पत्तिः सव्यापारप्रवृत्तिका साक्रियाक
र्तृनिष्ठास्तिसैवस्यात्कर्मबोधिका ३३ क्रियायांव
चनेकर्तृकर्मणोःलिंगसंख्यके कर्त्तरिप्रथमायत्रद्विती
यातत्रकर्मणि ३४ कुंभंकुलालःकुरुतेकर्तृवाच्यमि
यास्तिसा कर्मणिप्रथमायत्रतृतीयाचास्तिकर्तरि क
र्मक्रियापदंतत्रतुतिङन्तमितिबुध्यताम् कर्तृव्यापारि
काचापिविवक्ष्यतेयथा ३५ व्यापारेस्वचकर्मादेः
स्वातंत्र्यात्कर्मणाभवा ओदनःपच्यतेचास्तिकर्तृवत्क
र्मणिस्फुटा ३६ क्रियाकर्मप्रधानाचेत्कर्तृसंख्याविवक्ष

या क्रियते घटं कुलालेन कुलालाभ्यात्तथाखनैः ३८ छिन्न
त्तिचासिनात्रास्ति मथमासिः छिन्नस्यापि किञ्चित्प्रयोजनाद
त्रप्रक्रियाविज्ञयोमया ३९ दर्शितोन्यद्विशेषेणतिङ
न्तविषयेस्थितम् कर्मकर्तृक्रियाद्यैः स्यात् वाक्यार्थः स
विशेषणैः क्रियाविशेषणे चाद्यं द्वितीयावचनंभवेत्
लिंगंनपुंसकंचस्यात् अन्यत्रतुविवक्षया ४१ ।

## अथविशेष्यविशेषणभावः

विशेष्योवस्तुवाचीस्यात् तद्गुणंतुविशेषणम् विशेष
णोविशेष्यस्यलिंगसंख्याविभक्तयः ४२ भवंतिह्यज
हल्लिंगंत्यक्त्वासर्वत्रनिश्चयः मुख्योगौणोलाक्षणिकः
प्रयोगस्त्रिविधोभवेत् ४३ मुख्यंज्ञानंभवेन्मुख्येवि
शेषणपदंविना विशेषणैर्विशेष्यस्यज्ञानंगौणत्वकार
कम् ४४ यथाक्रोधगुणाक्रौणोरामःक्रोधोविषमह
त् सिंहोमाणवकश्चात्रलाक्षणीकोबलादिना ४५
अस्मात्पदादिदंबोध्यमितीच्छाशक्तिरिष्यते शक्तंपदं
चतद्वोतुयौगिकंरूढमित्यपि योगरूढंतथाज्ञेयंयौगि
कंरूढमेवच लक्षणासक्यसंबंधस्तात्पर्यानुपपत्ति
तः ४७ वक्तुश्चाभीप्सितोह्यर्थःशक्यार्थोलक्षणास्थ
ले जहत्स्वार्थाजहत्स्वार्थाभेदतोलक्षणाद्विधा ४८
गंगायांघोषइत्युक्तौतीरेसालक्षणामता स्वार्थरूपप्र
वाहस्यत्यागात्तीरेस्तिसायतः ४९ द्वितीयाछत्रिणोयां
तिकाशीमन्येपिबुध्यते रक्षतांदधिकाकेभ्योद्वितीयाल
क्षणात्रच ५० रक्षणंश्वादिकेभ्योपिज्ञायतेकाकल
णात् लक्षणाविषयोलक्ष्योव्यंजनानश्यकततः
५१ ॥

## अथद्वितीया

क्रियोद्देश्यंभवेत्कर्म्मद्वितीयातत्रजायते जलंपिबतिदुग्धंच
जलेदुग्धेचकर्म्मता ५२ जलदुग्धेक्रियोद्देश्येपानक्रिया
निरूपिते सप्तकर्म्माण्यकथितानीप्सिताभिहितेप्सिताः ५३
ईप्सितानीप्सितंकर्त्रोख्यमनभिहितंतथा गांदोग्धिचपयो
गोपाःकथितंतत्रविद्यते ५४ विषंभुंक्तेसुभेज्योपिग्रामं
गच्छंस्तृणंस्पृशन् अनीप्सितमिदंकर्म्मज्ञायतेत्वनिच्छ
या ५५ कटस्तुक्रियतेतेनाऽभिहितंतत्प्रदर्शितम् ई
प्सितंत्विदमेवास्तिज्ञातव्यंप्रदृधतेबुधः ५६ ईप्सितानी
प्सितंशुद्धंचोरयतिविमूढधीः कर्तृकर्म्मसमाख्यातंगुरुः
शिष्यंचप्रेषते ५७ शिष्योग्रामंतुयात्येवशिष्यःकर्त्ता
पिकर्म्मच उत्पाद्यंसंस्कार्य्यंचविकार्य्यंप्राप्यमेवच ५८
चतुर्धात्रविकार्य्यंतुद्विधाभवतिभेदतः प्रकृतेर्नाशकंचा
पिगुणान्तरकरंतथा ५९ भेदाएतेपिसर्वेषामन्तर्भूताः
पृथक्स्थिताः कटंकरोतिकारूकःउत्पाद्यंत्विदमेवहि ६०
दीप्तिंप्राप्नोतिसच्छिष्यःसंस्कारोत्रतुदीप्तया काष्ठंभस्मक
रोत्यत्रविकार्य्यंप्रकृतेर्हरम् ६१ मृदंघटंकरोत्यत्रगु
णान्तरकरंमतम् ग्रामंप्राप्नोतिग्रामीणःप्राप्यंकर्म्मात्रबु
ध्यते ६२ क्रियाविशेषणंकर्म्मनपुंसकमपीष्यते य
थानिःशंकमनिशंलंकांरामोवलोकते ६३ ऋतेवि
नासमायोगेद्वितीयाऽत्रजायते कालाधनोऽध्ववीप्सा
यांह्यंतरेणांतरोऽपरि ६४ अभितःपरितश्चापिनिकषा
समयाभिधिक् प्रत्यन्वधिगताचस्यात्सर्वोभयतसोरपि
६५ ऋतेबुद्धिंनवोधःस्याद्विनाज्ञानंसुखंनहि आ
बालंहरिभक्तिस्यात्मासंश्वा कोशमापगा ६६ वारंवारं

समयाति हा दुष्टं चान्तरेण शं अन्तरा त्वां मदयास्येन मुपर्य्यो
गतोस्ति सः ६७ नगरं चाभितो गर्ताः नगरं परितो जलम्
निकषाद्रिं स्थिता वृक्षाः समयाद्रिं जलाद्रिता ६८ अभ्या
सेच गुणं मानः धिङ्मूर्खं गुणवर्ज्जितम् दीनं प्रति कृपा
कार्य्यो सोनु गेहं गृहं त्वाधि ६९ परितःसर्वतो ग्राममन्त्रप
न्वोभयतस्सभा शीङ्स्थासामधि पूर्वाणामाङ्याध्यु
भिर्वसः ७० आधारः कर्म विज्ञेयन्तदुदाहरणं यथा
अधिशेते वनं रामो ध्यास्ते चाप्यधितिष्ठति ७१ आवस
ति हि वैकुण्ठमुपवसति च ध्रुवम् अधिवसति यस्तत्रानु
वसति समाधवः ७२ अभुक्त्यर्थस्य वसते नोपोष्य वस
तः पथि दुहाद्यर्थकधातूनामविवक्षितकारकम् ७३
कर्मसञ्ज्ञम्भवत्येवन्दुहादिः प्रोक्त ईरितः दुह्याच्पच्द
ण्ड्रुधि प्रच्छिचिब्रूशासुजिमन्थमुषाम् ७४ कर्मयुक्स्या
दकथितं तथा स्यान्नीहृकृष्वहाम् दुह्यादिद्वादशानां स्या
न्न्यादिकानान्तथैव च ७५ चतुर्णां कर्मणा युक्तं यत्तत्कर्मा
विवक्षितम् गान्दोग्धि च पयो गोपो याचते वसुधां बलिम्
७६ गोर्वलेरिन्यपादानमत्र कर्माविवक्षितम् तूर्णान्य
पूपं पचति चौरान्दण्डयते शतम् ७७ दुर्गं रुणद्धि राजानं
विपक्षन्नृपतिर्महान् अर्भकं पृच्छतो ध्यानं शाण्विनन्विदु
तः फलम् ७८ धर्मं ब्रूतेऽथ शिष्टः शिष्यं तापसत्तमो
राजन्यकमहाम्भोधिं कृष्णो जयति रुक्मिणीम् ७९ ममन्थ
फाणं दधि चौरो मुष्णाति तं शतम् अजां निनाय स ग्राममज्ञ
हारैनाम्वकर्षञ्च ८० वाहाथ समानार्थापर्यायेनान्नि वोधन
भित्तते प्रार्थते चापि बलिं पृथ्वीं स वामनः ८१ भाषते वक्ति
गदति शिष्यञ्च मेत्तथापरान् जानीते वन्दिकर्म्माख्यान्यान्

स्तोदाहृतिरूपितान् ८२
गतिबुद्ध्यर्थभक्षार्थाकर्म्मकाश्शब्दकर्मकाः येषान्तेऽत्र स
न्त्येषाम्प्रयोज्यकर्मसञ्ज्ञकः ८३ समादिष्टोऽथ तेषां ये प्रयो
गाः पूर्वदर्शिताः तान्येवोदाहरिष्येऽत्र कारिकारूपकाः यतः ८४
शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् आशयच्चामृतं दे
वान्वेदमध्यापयद्विधिम् ८५ आसयत्सलिले पृथ्वीं यस्स
मे श्रीहरिर्गतिः गत्यर्थयोर्नीवह्योस्तु प्रतिषेधः प्रदर्शितः ८६
सूतकर्तृवहेस्तत्र प्रतिषेधो न विद्यते अहिंसार्थस्य भक्षेश्च प्र
योज्यः कर्म नो भवेत् ८७ यत्त्मादीनान्दृशेश्चापि प्रयोज्यः क
र्मतामियात् हृक्रोर्वास्यात्तथानड्वान्दृशोऽभिवदेऽपि ८८
भारं वाहयते भृत्यैस्त्वादयति तैः पुनः सूतो वाहयते चोदं रथं
भक्षयते गरम् ८९ महेशेनाशमत्तुजान्कालन्नियामिति
स्थितिः पुत्रं जल्पयते भाषयते चैवोदाहरितथा ९० भक्ता
न्दर्शयते सैस्वाँस्तथा हारयते चटान् कटान्कारयतीस्यैं चै
वाभिवादयते गुरून् ९१ दर्शयतेङ्द्विवालेन वालं वापीतिभाव
य कर्मेणोदाहृता ह्येते प्रयोगाश्चार्थसाधकाः ९२ काला
ध्वनोर्द्दिनीयास्यात्संयोगातिशये सति मासं पचति मांसान्न
कुरुधानाश्च रोदति ९३ अधीते मासमत्रापि क्रोशमद्रि
श्च वर्त्तते नदी वहति वक्रापि क्रोशमित्यादिकं भवेत् ९४

## अथ तृतीया

सहायकन्तु करणं यद्व्यापारादनन्तरम् क्रियासिद्धिर्भवेत्त
त्र तृतीयात्र कर्तृके मता कुठारेणच्छिनत्त्येधः कुठारोऽत्र स
हायकः वाह्यमाभ्यन्तरं चेति करणं द्विप्रकारकम् चक्षु
षा पश्यति ग्रामं गंगां च मनसा न्तिमं साकं सार्द्धं सहालं किं

हयोगेऽपि तृतीयिका समयानिकषायोगे स्यादित्थंभूतलक्षणे हेतौ कर्तरि तु स्वार्थे विनायोगे भये गुदे कारणे च तथाप्यन्यूने हीने भवेत्तथा निंदार्थे संप्रदाने च तृतीया तूर्यकार्थिका प्रकृत्यादिकशब्देभ्योऽवयवाच्च विकारिणः ॥

तेन साकं च सार्द्धं वा सह पुत्रेण चागतः श्रमेणालं च किं कोधैः हा कष्टेन सुखं नहि पुत्रेण समया तोषः मित्रेण निकषा प्रियं इत्थंभूते तृतीयास्ति जटाभिस्तापसा इमे तापसत्वं जटानां च धारणाद्देवलक्ष्यते हेतौ धूमेन चास्त्यग्निः "हता रामेण राक्षसाः समं तुल्यं च चन्द्रेण सदृशं च मुखं तव विनाधनेन चिंतास्ति भयेन च पलायनम् गृहीतः शत्रुभिर्दुष्टैः कालो मित्रेण चानिशं गुणेन न्यून ऊनश्च हीनश्चापि गुणेन वै दास्यै मालार्थके निंद्ये दास्या मालां प्रयच्छति प्रकृत्या शोभनो गार्ग्यो गोत्रेणेति समेन च मायेण यातिकस्तोऽत्र काणः पत्तु· स्तथाक्ष्णि·णा ॥

## अथ चतुर्थी

कर्मणा यमभिप्रैति संप्रदानं तदुच्यते दार्थकानां तु धातूनां चतुर्थी तत्र जायते नमः स्वस्ति स्वधा स्वाहा वषडादियुतात्तथा अलंहिते निमित्तेऽर्थे स्यादाशिषि विकल्पनात्स्पृ रुच्यर्थकधातूनां स्याच्च क्रु स्थाशपान्तथा धारेः स्पृहेः क्रुधद्रुहेर्ष्यासूयार्थानां तथा। राधेरीक्षेर्गणश्चापि योगे ह्यर्थविशेषके चतुर्थी जायते तद्रुत्थीधातोः करणेऽपि च तादर्थ्ये क्लृपि सम्पन्नौ क्रियार्थोपपदस्य च तुमुनः कर्मणि तेयात्तुमर्थे भाववाचिनि मन्यतेः प्राणिवर्ज्ये च कर्मणि स्यादनादरे शृगालशुककाकानामेव प्राणिषु वर्जनम् नौका

धनेविभोः पितुः संजायतेपुत्रः करीसिंहात्पराजितः पा
पाज्जुगुप्सते विद्वान् नीचोधर्मात्प्रमाद्यते ज्याद्याद्द्रतिगां
शूरः ह्रताम्यर्णेपतत्यधः स्रुरिविंसृतेपापादंतर्धत्तेगु
रोर्वटुः यवेभ्योवारयतिगामपादानंक्रमात्मतम् भिन्ना
न्यपृथगादीनांयोगेपिस्यात्तुपंचमी गोपालाद्धीवराद्भि
न्नाःशूद्रास्तेषांसमामताः पावरास्तुपृथकतेभ्यःन्यूना
स्तेभ्योन्यजास्तथा । इतिपञ्चमी

## अथषष्ठी

षष्ठीसम्बन्धमात्रस्याकर्तृत्वेनविवर्जिता भ्रातानैत्रस्य
चायंवैसंबंधश्चैत्रगोमतः संबंधगात्तुषष्ठ्येषाविवक्ष
वशात्तोद्वयोः संबंधस्योभयस्थत्वादुभयत्रापिजायते
निर्द्धारणेयथासास्यात्सर्वेषांगुणवान्वरः राजास्य
पुरुषस्यायंराज्ञोभृत्यस्तुभक्तिमान् प्रयोगभेदज्ञाज्ञे
याषष्ठीतूभयत्रापिसा द्वितीयार्थेपिषष्ठ्यास्तुकारकत्वं
यथात्रहि प्राज्ञोर्दिनस्तिसूरेपंमातुःस्मरतिचेन्यपि कु
त्रचित्तुद्वितीयायाःकारकत्वविवर्ज्जिताः यथातास्वत्र
विज्ञेयाःद्विमासिंदसिणेनतु जडाभिस्तापसाश्चात्रपा
कायस्यास्तिकायथा धूमाद्वह्निश्चभोधीरचर्म्मणीद्वी
पिनंततः पातिवत्तापतेयास्तितुध्यतेदंतिपंचभिः कि
याभिश्चाप्रयुक्ताभिःकारकत्वेनचान्यथा ॥

## अथसप्तमी

अधिकरणमाधारःसप्तमीतत्रजायते क्रियाज्ञाप्यप
दार्थानांविषयेसाचदृश्यते पततप्रतिबंधादेमाधारं

नेविदुर्बुधाः मद्याधिकरणंज्ञेयंषड्विधंनामभेदतः सामीप्यं व्यापकश्चैव वैषयिकोपचारिके औपश्लेषिकनैमित्तकसत्नैव त्तुषड्विधम् यथांचोषोहृदि ग्रस्य सामीप्यमिदमीरितम् व्यापकंतुतिलेतैलं वैषयिकं वनेम्रगाः ॥

ताराशातंकराग्रेनदौपचारिकसंतकम् गुहेश्वरस्थितिर्यं स्मानैमित्तकमिदंमतम् कटेशेतेकुमारोसावौपश्लेषिक सञ्ज्ञकम् निर्द्धारणेनिमित्तेचसतिसत्यर्थगापिच पंडिते षुकविःश्रेष्ठःनिर्द्धारणमिदंमतम् चर्मणीद्वीपिनंहंतिनि मित्तार्थेत्रसाप्तमता सत्सुसन्तेषुनोदुःखमित्यादौसतिसप्त मी दियमानेगवांगोष्ठेसत्यर्थोस्यत्रकिंपुनः

श्लोकोयथा

चर्मणीद्वीपिनंहन्तिदन्तयोर्हंतिकुंजरं
केशेषुचमरींहन्तिसीम्निपुष्कलकोहतः
नाभिकोशोत्रसीमास्यात्गंधम्रगस्तुपुष्कलः

अथमिश्रितार्थाःविभक्तयः ॥

तृतीयापंचमीहेतुभयेहर्षेचसम्मते हर्षाद्धर्षेणवायाति भयाद्भयेनकम्पते प्रभवतीतियोगेस्तःचतुर्थीषष्ठिकेचते तस्यप्रभवतीतिस्यात्तस्मैप्रभवतीतिच विनाश्यकहयो र्योगेद्वितृतीयेथपंचमी भक्तिंविनाद्वथाजन्मपुत्रेणचवि नाकुलम् विनागुणात्त्वमानंस्यात्सर्वलोकमतंत्विदम् श्यकुठारमेधोत्रकुठारेणश्यकहतम् कुठाराच्चश्यक

ज्ञानमिंधनंसमुपार्ज्जितम्  ऋतेयोगेद्वितीयास्यात्
पंचमीचापिजायते  ऋतेबुद्धिंनबोधःस्यादृतेज्ञाना
न्सुखंनहि  चतुर्थीसप्तमीहेतुनिमित्तार्थेप्रकीर्तिते
यज्ञायचपशुर्वद्धःयज्ञेवापशुबंधनम्  समानार्थ
कशब्दानांयोगेषष्ठीतृतीयके  सप्तमःसहशास्त्रस्ये
धनस्यचधनेनवा  तेयेनिर्द्धारणेहेतुसप्तमीषष्ठि
काभिधे  सर्वेषांगुणवान्कृष्णःसर्वेषुगुणवान्वाः
तुष्टापोषेषुभोगेनतृतीयाषष्ठिकेचने  तस्यतुष्ट
स्तेनैवतेनतस्यापमानितः  तेनतस्योपयुक्तं
स्यात्तस्यभोगोकृतेनवा  तृतीयापञ्चमीषष्ठी
कारणेस्युर्विभक्तयः  कुठारेणच्छिनत्त्येधःस्तोका
न्मुक्तोभवेत्तथा  कारणेषष्ठिकाभिन्नंसञ्जानीते
घृतस्यच  तृतीयार्थोत्रसर्वत्ररूपाण्येवमभेदता
तृतीयात्वर्थकाषष्ठीसम्प्रदानेतथात्रिधा  दास्याः
संयच्छतेमालांदास्यैचेत्यर्थबोधनम्  सुधिनाय
वदान्यत्वेसम्प्रदानेचतुर्थिका  वलिस्त्वद्भ्यःसदेयो
त्रार्थस्तुभ्यसेत्तिच  सम्प्रदानेतुहेतवेकालानि
यतकेक्रये  चतुर्थीचतृतीयाचशतेनचशताय
च  अध्वभिन्नेतुगत्यर्थेकर्मणोद्विविभक्तिके
द्वितीयाचचतुर्थीचग्रामंग्रामायवाव्रजेत्॥

इतिविभक्त्यर्थाः

## अथसमासाः

पदानांबह्वयोर्वापिचैकपदंसमासस्तत्र विभक्तिलोपस्त
स्मांतेविभक्तिर्जायतेपुनः तत्पुरुषोबहुव्रीहिःकर्मधा
रयएवच द्विगुर्द्वन्द्वाव्ययीभावाः समासाःषट्प्रदर्शिताः
अत्रार्थैकस्यचित्कृषोराजानंस्वार्थबोधने द्वंद्वोद्विगुरपि
चाहंमद्गेहेनित्यमव्ययीभावः तत्पुरुषकर्मधारय
येनाहंस्यांबहुव्रीहिः चार्थेद्वंद्वःसमासस्याद्भेदे
कर्मधारयः अन्यार्थेतुबहुव्रीहिःनादौतत्पुरुषप्रथा
नित्योनित्यान्तुगन्योलुक्केवलोष्टनञ्च मध्यमप
दलोपीचोपपदोह्येकशेषकः लौकिकोलौकिकस्यापि
वस्तांभेदाइमेपिच. समासेषुचप्राधान्यंचतुर्धाविप
नेस्फुटम् पूर्वोत्तरोभयान्यार्थेभेदैर्लक्ष्यानुरोधतः
द्वंद्वैकशेषद्विगवःप्रायःस्युर्हिप्रधानकाः द्विगुर्नञ्
मध्यलोपीचकर्मधारयएवच अव्ययीभावकेपूर्व
प्रधानमव्ययोत्तरम् तत्पुरुषस्यविज्ञेयम्बहुव्रीहाव
यान्यकम्॥

## अथतत्पुरुषः

विभक्तिनाम्नावत्तन्नाम्नास्तौतत्पुरुषामताः प्रथमाद्यं
तिमेशब्देनादौतत्पुरुषेभवेत् प्रथमादौक्वचिद्वापिपू
र्वकायःसमासके पूर्वकायःप्रयोगादौप्राधान्यपूर्वके
क्वचित्

प्रथमातत्पुरुषोयथा

पूर्वःकायस्य पूर्वकायः

अर्द्धंपिप्पल्याः अर्द्धपिप्पली
द्वितीयंभिक्षायाः भिक्षाद्वितीयं
एवंतृतीयातुर्यादिशब्देऽपिसमासः
प्राप्तोजीविकां प्राप्तजीविकः
आपन्नोजीविकां आपन्नजीविकः

द्वितीयातत्पुरुषोयथा कृष्णंश्रितः कृष्णश्रितः नरकंपतितः नरकपतितः ग्रामंगतो ग्रामगतः सुखम् आपन्नः सुखापन्नः

तृतीयातत्पुरुषोयथा शंकुलयाखंडः शंकुलाखंडः शंकुलाखगकर्त्तरी मासेनपूर्वः मासपूर्वः कुठारेणछिन्नः कुठारछिन्नः वाचानिपुणोवाङ्‌निपुणः

चतुर्थीतत्पुरुषोयथा यूपायदारु यूपदारु कुंडलायहिरण्यं कुंडलहिरण्यं भूतायबलिः भूतबलिः शिवायरक्षितं शिवरक्षितम् तस्मैहितं तद्धितम्

पंचमीतत्पुरुषोयथा सिंहात्भयं सिंहभयं चौरात्भयं चौरभयं हयात्पतितः हयपतितः

षष्ठीतत्पुरुषोयथा कृष्णस्यभक्तः कृष्णभक्तः वृक्षस्यफलं वृक्षफलम् वृक्षपुष्पं वृक्षमूलं वृक्षपत्रमित्यादि

सप्तमीतत्पुरुषोयथा अक्षेषुशौंडः अक्षशौंडः अक्ताः स्तनपाशकाः ग्रामेगतः ग्रामगतः कूपेपतितः कूपपतितः

## अथनञ्समासाः

प्रायोव्ययेऽव्ययार्थे नञभावार्थवोधकः नञ्पुरुषोह
सोयं वैनञ् नाम्नात्र वर्णितः

| | | | |
|---|---|---|---|
| न ब्राह्मणः | अब्राह्मणः | न अश्वः | अनश्वः |
| न घटः | अघटः | न अकारः | अनकारः |
| न भेदः | अभेदः | न उत्तरम् | अनुत्तरम् |

अत्र स्वराद्युत्तरपदयोगात्
नकारागमः

## अथबहुब्रीहिः

समेधाथबहुब्रीहिःप्रायोन्यार्थप्रधानकः द्विपदोबहु
रूपोपि सद्रूपर्वपदस्तथा संख्योत्तरपदश्चैव संख्योभ
यपदोपिच दिगंतव्यतिहाराभ्यां लक्षणाभ्यां तु सप्तधा
ससप्तदशधाज्ञेयः पुनर्भेदैः सलक्षणः स्वतरामोय
मित्यादौ यच्छब्देनान्यबोधनात् द्वित्रेत्यादौ तु धेज्ञेया
पदोभयप्रधानता द्विपदस्तु बहुब्रीहिर्विभक्त्यर्थे स
माश्रितः द्वितीयादिविभक्तीनां नामभिः षट्विधो
मतः षष्ठ्यर्थेस्तु बहुब्रीहिस्त्रिधोदाहरणैः कृतः
नञ्गुणोः नञ्गुणोपिस्यात् संविज्ञानोतसंयुतः समा
स्यर्थो बहुब्रीहिः सामानाधिकरण्यभाक् चक्रपा
णीप्रयोगादौस्यात् व्याधिकरणोपिच।

## उदाहरणानि

तत्र प्रथमं द्विपदो बहुव्रीहिः।

१ द्वितीयार्थे बहुव्रीहिः यथा ग्रामंधनं येप्राप्तं स ग्रामधनः ग्रामम् प्राप्तं यं पुरुषं स ग्रामप्राप्तः आरूढवानरोवृक्षः

२ तृतीयार्थे बहु॰ यथा निर्जितःकामोयेन स निर्जितकामः दत्तंदानं येन सदत्तदानः

३ चतुर्थ्यर्थे बहु॰ यथा उपनीतंभोजनंयस्मै स उपनीतभोजनः दत्तोदंडोयस्मै स दत्तदंडः

४ पंचम्यर्थे बहु॰ यथा निर्गतं उदकं यस्मात् स निर्गतोदकः कूपः निर्गताजनायस्मात् ग्रामात् स निर्गतजनोग्रामः

५ षष्ठ्यर्थे बहु॰ यथा पीतं अम्बरं यस्य सपीताम्बरः विष्णुः बहवो भृत्यायस्य स बहुभृत्योधनाढ्यः

६ षष्ठ्यर्थेभेदस्तद्गुणसंविज्ञानो बहुव्रीहिः यथा तस्यगुणास्तद्गुणाः तद्गुणाः संविज्ञायंते यत्रेतिविग्रहः लंबकर्णमानयेत्यत्र लंबौकर्णौयस्यस लंबकर्णः

इतिज्ञाने लंबकर्णतारूपतद्गुणसंविज्ञानपूर्वकं कर्णविशिष्टस्यैवानयनंभवति

७ अतद्गुणसंविज्ञानो बहुव्रीहिर्यथा दृष्टसागरमानयेत्यत्र नोरूपतद्गुणविशिष्टस्यानयनासंभवात्तौ रूपतद्गुणविज्ञानपूर्वकमेवतस्यानयनंभवति

८ समम्यर्थे व· यथा मामंउदकंयस्मिन्तेत्रे तत्सा मोदकंतेत्रं घृतंमधुयास्मिन्पात्रे तत्घृतमधु पात्रम्

९ बहुपदो· यथा सुखदाः हृद्दाःब्राह्मणाः यस्य स सुखद हृद्दब्राह्मणः + बहुली राग्रष्टिर्गौर्य स्य सबहुलीरागष्टिगुः।

१० संख्योत्तरपदोः यथा उपसमीपेदशानामिमेपुरु षाः उपदशाः उपविंशाः उपशताः

११ संख्योभयपदोः यथा द्वौ वा त्रयो वा मुख्यायेषु इ तिद्वित्रा· पंचदशाः पंचषट्

१२ सहपूर्वपदो· यथा सहमूलेनउद्धृतः तरुः ससमूलोद्धृतः सहपत्नैःपतितोयः स·सपत्तपतितः पत्नाः सहायाः

१३ व्यतिहारलक्षणो यथा केषेषुकेषेषुगृहीत्वाप्रव र्ततेयत्युद्धं तत्केशाकेशि मुष्टिभिः मुष्टिभिः मुष्टीमुष्टि दंडैश्चदंडैः दंडादंडि

१४ दिगंतलक्षणो यथा दक्षिणस्याश्चपूर्वस्याश्च दि शोर्यदन्तरालं सेयंदिक दक्षिणपूर्वा· उत्तरपूर्वा दक्षिणपश्चिमा इत्यादि

१५ समाधिकरणो यथा बहवोवर्णाः यस्मिन् पटेसं ति सबहुवर्णः× बहवः पांशायस्मिन्कटेसंति सबहुपांशुः कटः

१६ व्यधिकरणो यथा चक्रंपाणौयस्यसचक्रपाणिः

१७ नित्यसमासरूपो व·यथा कंठेकालोयस्य सकंठे कालःशिवः बिलेशेतेयः सबिलेशयःसर्पः

उरसि लोमानि यस्य स उरसिलोमा इति बहुब्रीहिः

## अथ कर्म्मधारयः।

कर्म्मधारयसंज्ञस्तु समधाचाष्टमोपिहि विशेषणादिकश्चैव विशेष्यादि पदस्तथा विशेषणद्वयादिश्चोपमानादि पदोपिच उपमानोत्तराख्योस्ति संभावनादिकस्तथा अवधारण पूर्वाख्यः समपूर्वपदान्वितः मध्यमपदलोपी च कर्म्मधारयकोष्टमः

प्राधान्यं रूपभेदेन द्विविधं कर्म्मधारये क्वचित्पूर्वपदार्थे च क्वचिदुत्तरके तथा शूरः पुरुषसिंहोयमत्र पूर्वपदार्थके नीलोत्पलमिवास्यास्ति प्राधान्यं चात्रतूत्तरे

### उदाहरणानि यथा

१ विशेषणपूर्वपदो यथा नीलंचतदुत्पलं नीलोत्पलम् श्वेतश्चासौ अश्वश्च श्वेताश्वः नीलएवघटः नीलघटः

२ विशेष्यपूर्वपदो यथा वैयाकरणश्चासौ खसूचीच वैयाकरणखसूची शास्त्रदृष्टः अहोनिर्म्मलंगगनमितिवक्ता

३ विशेषणोभयपदो यथा शीतंचतत् श्वेतञ्च शीतश्वेतम्

४ उपमानपूर्वपदो यथा कुंदइवश्वेतः कुंदश्वेतः मेघइवश्यामः मेघश्याम

५ उपमानोत्तरपदो यथा पुरुषोयंव्याघ्रइव पुरुषव्याघ्रः नरोयंसिंहइव नरसिंहः पुरुषोयंवृष

इव गुरुवद्गुरुः

६ संभावनापूर्वपदो यथा गुणा इति बुद्धिः गुणबुद्धिः पुत्र इतियत्न ग्रहणं पुत्रग्रहणम्

७ अवधारणापूर्वपदो यथा गुणएवधनं गुणधनं स्वकृतमेवबंधुः स्वकृतबंधुः

८ मध्यमपदलोपी यथा शाकःप्रियोयस्य पार्थिवस्यसशाकप्रियःशाकप्रियश्चासौपार्थिवः शाकपार्थिवः अत्रमध्यगतप्रियपदलोपात्संज्ञा इतिकर्मधारयः

## अथद्विगुः

संख्यापूर्वपदानांच समासोद्विगुरुच्यते द्विगुःस्यादेकवद्भावोनेकवद्भावसंज्ञकः विषयस्तद्वितार्थस्यवाच्योपितद्धितार्थके समाहारोपितेषवोत्तरपदपरस्त्था द्वंद्वैकशेषद्विगवः प्रायःपूर्वप्रधानकाः

उदाहरणानियथा

एकवद्भावो यथा त्रीणिशृंगाणि समाहृतानि इति त्रिशृंगं पंचमूलानिसमाहृतानि इतिपंचमूली दशमूली शतमूली

अनेकवद्भावो यथा चतस्रोदिशः चतुर्दिशः त्रयोलोकाः त्रिलोकी

समाहारो यथा त्रयाणांसखीनां समाहारः त्रिसखं अदंतानांस्त्रीप्रत्ययांतत्वं पंचानांवटानांसमाहारः पंचवटी ।त्रयाणांलोकानांसमाहारः त्रिलोकी

त्रिफला इति रूढिः

उत्तरपदो यथा पंचगावः धनं यस्य सपंचगवधनः

तद्धितार्थविषयो यथा द्वयोर्मात्रोरपत्यं द्वैमातुरः षण्णा
म् मातॄणामपत्यं षाण्मातुरः पंचनापितानामप
त्यं पांचनापितिः

तद्धितार्थवाचो यथा पंचभिः गोभिः क्रीतः पंचगुः

इति द्विगुः

## अथ द्वंद्वः

द्वंद्वः पञ्चविधश्चार्थे ह्येकशेषसमन्वितः समासे द्वंद्व
केत स्यात् प्राधान्यं द्विपदद्वये समुच्चयसमाहारौ तथै
वान्वाचयो मतः इतरेतरयोगश्चाप्येकशेषोस्ति पं
चमः लिंगं चांत्यस्य शब्दस्य द्विर्वचनादि पंचमे।

१ समुच्चयो· यथा चैत्रः पचति मैत्रश्च अत्रविभ
क्तिलोपाभावेपि चकारादेकवाक्यतारूपा
समासता वाक्यार्थबोधः फलम्

२ समाहारो यथा शंखश्च पटहश्च तयोः समाहा
रः शंखपटहं वाक्च त्वक्च द्वयोः समा
हारः वाक्त्वचम् पाणिपादम्
अत्रांतिमशब्देएकवचनांतता नित्यनपुंस
कता च सदैव

३ अन्वाचयो· यथा भिक्षामट गां चानय· अत्रैकं
कार्य्यमहत्त्वस्य सामान्येन द्वितीयकार्यक
रणं भवति

४ इतरेतरयोगो· यथा रामश्च कृष्णश्च रामकृष्णौ

रामश्च कृष्णश्च गोविन्दश्च रामकृष्णगोविंदाः
अत्रप्रत्येक पदप्राधान्यात् अनेकद्वयोः द्विवचनंब
हूनांसमासेबहुवचनंचभवति
अन्त्यशब्दलिंगताच यथा गंगाचप्रयागश्च गंगा
प्रयागौ प्रयागश्च गंगाच प्रयागगंगे
५ एकशेषो यथा माताच पिताच पितरौ दुहिताच
पुत्रश्च पुत्रौ ब्राह्मणीच ब्राह्मणश्च· ब्राह्म
णौ इतिद्वंद्वः
समुच्चयेनवाक्यन्वेद्व हूनांवाद्वयोश्च वा अंगनमाश्रिता
संख्यावाचकानांविकल्पतः

## अथाव्ययीभावः

नामादिश्चाव्ययादिश्चाव्ययीभावोद्विधाभवेत् त्वती
योपिभवत्येकः पुनरव्ययमंतया पूर्वोत्तरान्यसंतं
त्वप्राधान्यंतत्रविद्यते पूर्वस्मिन् चोपकृष्णंतु गङ्गा
निविपिनेनिशि प्राधान्यंचोत्तरस्मिंस्तु नगरेलिह
खंप्रति उत्तमगङ्गन्तिद्वन्द्वेत्वत्रान्यप्रधानकः
नामपूर्वपदो यथा सूपस्यलेशः सूपप्रति घृतस्य
लेशः घृतप्रति शाकस्यमात्रं शाकप्रति फल
स्यमात्रं फलप्रति
अव्ययपूर्वपदो यथा कुंभस्य उपसमीपेवर्त्तते उप
कुंभं कृष्णस्य उपसमीपेवर्त्तते उपकृष्णं क्रम
मनतिक्रम्यवर्त्तते यथाक्रमम्।
पुनरव्ययादिर्यथा ब्राह्मणान् आमंत्रयस्व ब्राह्म
णानामंत्रयस्व यावन्त्यमत्राणिसन्ति तावतो

ब्राह्मणानामंत्रयस्वेति या वदमत्रम्

## अथ संकीर्णाः समासाः

नित्योऽनित्योऽलुगन्योऽलुक् केवलोऽथ नञपि च मध्यमपदलोपी चोपपदोऽप्येकशेषकः

१ नित्यसमासो यथा कंठेकालः अधिहरि इत्यादि बहुव्रीह्यादौ दर्शितः

प्रायेणाविग्रहोनित्यसमासः

अस्थिरात्वकः कुंभकारश्च

२ अनित्यसमासो यथा राजपुरुषः राज्ञः पुरुषः पक्षे वाक्यमपि दृश्यते

३ अलुक् समासो यथा नचिरात् युधिष्ठिरः सरसिरुहम् अत्र इवेन समासो विभक्त्यलोपश्च जीमूतस्य इव जीमूतस्येव

४ केवलसमासो यथा भूतपूर्वः पूर्वंभूतः इतिविग्रहः केवलः अलुगेव वागर्थौ इव वागर्थाविव

५ नञ् समासः तत्पुरुषांते दर्शितः

६ मध्यमपदलोपी कर्मधारयांते दर्शितः

७ उपपदसमासो यथा सुवंतस्यातिङंतेन सहयोऽन्वयः सउपपदसमासः कर्मवाचके पूर्वपदे सति पचनहिधानम्

कुंभं करोतीति कुंभकारः ग्रंथकारः मालाकारः कुंभादि सुवंतपदैः सह करोतीतितिङ्पद मतिनिधिकारपदसमासः

एकशेषः अयं हन्दान्ते दर्शितः
लौकिको यथा सर्वश्च नः भ्रनश्च सर्वः
अलौकिको यथा सर्व अम्‌ भ्रन स्व राजन्‌ उःस पुरुष स्व इत्यादिरूपः

इति समासाः समाप्ताः

अथास्मिंस्तद्धितप्रकरणे विशेषद्योतनाय तत्त्व दशविभागा आकरे प्रदर्शिता स्तेषाञ्च कतिपये ऽनेक भेद संवलिता यथाऽपत्याधिकारनाम्नि प्रथमविभागे गोत्रापत्ययुवापत्येत्यावान्तरभेदात्त्रिधा सामान्यापत्य गोत्रापत्य युवापत्येतिनामभिः प्रत्यया अभिधीयन्ते तेषु प्रधानादि विभागा अकारादि वर्णक्रमेण प्रदर्शयिष्यमाणशब्देषु स्वादिगतैकद्वयादिवर्णैस्सूचिता उत्तेयाः येषां भागाः येषां यथाक्रमसुल्लिखितास्तेषां विलोक्यताम्‌ ॥

यदा पौत्रादीनपत्यत्वेन वक्तुमिच्छेत्तर्हि पितामहादीनां ते गोत्रापत्यानि कथ्यन्ते ऽथ यदा पित्रादयो ज्येष्ठो भ्राता वा जीवति तदा पितामहादिमपेक्ष्य पौत्रप्रभृतेरपत्यत्वन्तर्थादिकं युवापत्यमिति व्यवह्रियत इति बोध्यम्‌

| प्रकरणनाम | संकेताक्षराणि | | |
|---|---|---|---|
| १ अपत्याधिकारः | अप | ९ ठगधिकारः | ठग |
| २ चातुरर्थिकाः | चातु | १० तस्य तदधिकारः | तस्य |
| ३ शैषिकाः | शैषि | ११ मत्वर्थीयाः | मत्व |
| ४ प्राग्दीव्यतीयाः | प्राग्दी | १२ प्राग्दिशीयाः | प्राग्दि |
| ५ ठगाधिकारः | ठग | १३ प्रागिवीयाः | प्रागि |
| ६ प्राग्घितीयाः | प्राग्घि | १४ तद्राजाः | तद्रा |
| ७ यद्विधिः | यद्वि | १५ द्विरुक्तप्रक्रिया | द्विरु |
| ८ आर्हीयप्रकरणम्‌ | आर्ही | | |

अंगना। नः। म०। अंगानि अस्याः सन्तीति। कल्याणान्यंगान्यस्याः

अंगिरसः। अण्। अप०। अंगिरसः अपत्यानि। बहुत्वे। आंगिरसा अपि।

अंगुलीयम्। छः। शै०। अंगुल्यां भवं। शेषभवे वा।

अंगुलीयकम्। कः। शै० स्वार्थे अंगुलीयमेवेति विग्रहः

आग्नेयम्। ढक्। अप० अग्नेरपत्यादि

आग्रभोजनिकः। ठक्। ठ०। अग्रे भोजनं नियतं दीयते यस्मै सः

अग्रिमम्। डिमच्। शै०। अग्रे भवम् साधु वा

अग्र्यः यत्। प्राग्दि। अग्रे साधुः।

अजथ्या। थ्यन्। छ०। अजाभ्यो हिता अजथ्या। अजथ्या अजा
समूहः।

अणीष्ठः। इष्ठन्। प्राग्। सर्वेषामतिशयेन अणुः इति।
अणीमा। इमनिच्। तज्जन्य। अणोर्भाव इति।

अणुकः। कन्। तद्रा। अणुरिव प्रकृतिः

आणवम्। तद्राज०। अणोरेव

अतः। तस्। तसिल्। अव्य० प्राग्दी०। अस्मादिति।

अततः तसिल्। तद्रा०। अतेरिति।

अतितराम्। तरप्। प्राग्। अतिशयेन अतिशयम्

आतीसारकी। इनिः। म०। अतीसारमस्यास्तीति।

अत्यंतीनः। खः। म०। अत्यंतं गामी अत्यंतीनः।

अत्र। त्रल्। प्राग्दि०। अव्यय। अस्मिन्निति

अद्य। द्य। प्राग्दि०। अव्य। अस्मिन्नहनि इति।

अद्यतनम्। ट्यु। ट्युल्। शै०। अद्य जातमित्यादि।

अधः। असिः। प्राग्दिवी। अव्य। अधरस्यां दिशि। अधरस्याः
दिशः। अधराद्वा दिक्।

अधरेण। एनप्। प्राग्०। अधरस्मिन्निति।

अधरेद्युः। एद्युस्। प्रागि। अधरस्मिन्नहनि।
अधस्तात्। अस्तातिः। प्रागिवी॰। अधरस्यां वा इति।
अधार्म्मिकः। ठक्। ठ। अधर्म्ममाचरतीति।
अधित्यका। त्यकन्। म॰। पर्वतस्य आरूढंस्थलमिति।
अधीती। इनिः। म॰। अधीतमनेनेति।
अधुना। अधुना। प्राग्दी॰। अव्य॰। अस्मिन् कालेइति।
अध्वनीनः। खः। म॰। अध्वानम्। अलंगच्छतीति।
अध्वन्यः। यत्। म॰। अध्वानम् अलंगच्छतीति।
अनेकधा। धा। अनेकप्रकारः।
अन्यतरेद्युः। एद्युस्। प्राग्दि॰। अव्य॰। अन्यतरस्मिन् अहनिइति।
अन्यथा। थाल्। प्राग्दि॰। अव्य॰। अन्यप्रकारेणेति।
अन्यदा। दा। प्राग्दि॰। अव्य॰। अन्यस्मिन् कालेइति।
अन्येद्युः। एद्युस्। प्राग्दि॰। अव्य॰। अन्यस्मिन्नहनिइति।
अन्योन्यस्य। अन्यस्यद्वित्वम्। पूर्वपदस्तुपस्तुरादेशः द्विरु॰
कर्म्मव्यतिहारेणान्यः अन्यस्य
अन्योन्यंनमते।
अन्योन्येनकृतम्।
अन्योन्यस्मैदत्तम्। द्विरुक्तम्
अन्योन्याश्रयः।
अपराह्णकः। वुन्। शै॰। अपराह्णेजातः।
अपराह्णेतनम्। ट्यु। ट्युल्। शै॰। अपराह्णकालेजातं।
अपरेद्युः। एद्युस्। अपरस्मिन्नहनिइति।
अभितः। तस्॰ प्राग्दि॰। अव्य॰ चतुर्दिग्भ्यइति।
अभिरूपतमा। तमप्। सर्वेषामतिशयेन अभिरूपेति।
अमात्यः। त्यप्। शै। अमांतिकसहाययोरव्ययं। निकटेसहा

येवावर्त्तन्तेइति।
अमुतः। तसिल्। प्राग्दि॰। अव्य॰। अमुष्मादिति
अमुत्र। त्रल्। प्राग्दी॰। अव्य॰। अमुष्मिन्इति
अयाथातथ्यम्। ष्यञ्। नञ्तत्। अयथा तथाभावइति।
अर्घ्यः। यत्। आर्हीं॰ अर्घमर्हतीति।
अर्घ्यम्। यत्। तद्धा॰। अर्घार्थमुदकमित्यादि।
अर्थी। इनिः। म॰। अर्थोस्यास्तीति।
अर्थ्यं। यत्। प्राग्घि। अर्थादनपेतम्।
अर्द्धिकः। ठिकन्। आर्हीं॰। अर्द्धेनक्रीतः। इति
अर्द्धिकी। ठिकन्। आर्हीं॰। अर्द्धेक्रीतायासा।
अर्णवः। वः। मत्व॰। अर्णांसि विद्यंते अस्यइति
अल्पशः शस्। तद्धा॰। अल्पानिइति॰
अल्पीयान्। ईयसुन्। तद्धा॰। अयमेषामतिशयेन अल्पिष्ठइति
अवः। अस्तिः। प्रागिवी॰। अव्य॰। अवरस्यांदिशि। अवरस्यादिशः। अवराबादिक्
अवरतः। तसिल्। प्रागिवी॰ अव्य॰। अवरस्यादितम्
अवरस्तात्। अस्तातिः। प्रागिवी॰। अव्य॰। अवरस्यांदिशि। अवरस्यादिशः। अवराबादिक् इति
अवस्तात्। अस्तातिः प्रागिवी॰। अव्य॰। अवरस्यांदिशि। अवरस्यादिशः अवराबादिक् इति
अवंती॰। लोपः अप॰ अवंतीदेशस्यनगर्याः वाराली
अवाच्यम्। यत्। शै॰। अवाच्यांदिशिभवं॰ अपशब्दवाचकस्तत्कृदंतप्रयोगः।
अवारपारीणः। खः शै॰। अवारपारे ग्रामादिः। खः। मः। अवारपारेगामी इति।

अवारपारवारीणः। खः शै· अवारपारवारेजातादिः।
अवारीणः। खः। शै· अवारेजातादिः। खः। म·। अवारेगामीइति
अविथ्या। ष्यन्। ऊ· प३ कायेदिना।
अश्ममयम्। मयट्। प्रा·। अश्मनः अवयवरूपंविकाररूपंवा
अश्वीयम्। छः। चा·। अश्वानांसमूहः।
अष्टमः। डट्। मडागमः। म·। अष्टानाम्पूरकः।
अंसलः। लच्। म·। अंसोस्यास्तीति।
अस्मदीयः। छः। शै·। आवयो· अस्माकंवा। अयम्।

आकरिकः। ठक्। ठ·। आकरेनियुक्तः।
आकर्षकः। वुन्·। म·। आकर्षेकुशलः। रेफाभावे। आकषकोपि
आगस्त्यः। यञ्। अप। अगस्त्यस्य गोत्रापत्यं आगस्त्यः। तस्य
बहुत्वेयञोलुकि आगस्त्य देशेच अगस्तयः।
आंगः। अण्। अप·। अंगस्यगोत्रापत्यं। ततः पिञ्युवापत्येत
स्यलुक्। आंगः पितापुत्रश्च।
आंगी। अण्·। अप·। अंगदेशानांराज्ञी।
आग्निमारुतम्। अण्। चा·। अग्नि मरुतौदेवते अस्य।
आग्नेयाः। ढक्। चा·। अग्निर्देवतास्येति। तस्येदमितिवा।
आग्रहायणिकः। ठक्·। चा·। आग्रहायणी पौर्णमास्यस्य
स्मिन्मासे इत्यादि।
आग्रहायणीकम्। ठञ्·। शै·। आग्रहायण्यांदेयमृणम्।
आग्रहायणी। अण्·। चा·। अग्रेहायनमस्यांसा।
आचमनीयम्। यः। प्रा·। आचमनार्थमुदकादि।
आचमनीयकम्। यः। प्रा·। आचमनार्थमुदकम्।
आचार्यकम्। वुञ्। आचार्यस्यभावइति।

आप्यकुलीनः। खः। अप॰। आप्यकुले जातः अथवा आप्य
कुलस्यापत्यम् पुमान्।
आघ्नचरः। चरट्। भागिवी॰। आघ्नोभूतपूर्व इति।
आतिथेयम्। ढञ्। भागिप॰। अतिथये साधु इति।
आतिथ्यम्। ञ्यः। तद्रा। अतिथये हितं दीयते वा
आत्मनीनम्। खः। छ॰। आत्मने हितमिति।
आत्रेयः। ढक्। अप॰ अत्रेरपत्यमिति
आथर्वणः। ञ्यः। शै॰। अथर्वणां धर्म आम्नायो वा।
आथर्वणिकः। ठक्। चा॰। अथर्वणमधीते वेत्ति वा
आदितः। तसिल्। तद्रा। आदौ इति। अव्य॰
आदित्यः। ण्यः। अप॰। अदितेरपत्यादि।
आदिमम्। डिमच्। म॰। आदौ भवः इति
आधिदैविकम्। ठञ्। शै॰। अधिदेवे भवम् इत्यादि
आधिभौतिकम्। ठञ्। शै॰। अधिभूतं वर्त्तते अधिभूते
भवम् इत्यादि।
आध्यात्मिकम्। ठञ्। शै॰। अध्यात्मनि भवमित्यादि।
आध्वर्यवम्। अञ्। शै॰। अध्वर्योः इदम्।
आनुकूलिकः। ठक्। ठ॰। अनुकूलं वर्त्तते।
आनुलोमिकः। ठक्। ठ॰। अनुलोमं वर्त्तते।
आपणीकः। ठक्। ठ॰। आपणस्य धर्मः
आपत्कालिकः। ठिञ्। शै॰। आपत्काले जातादिः।
आपत्कालिकी। ठञ्। शै॰। आपत्काले जातादि
आपराह्णिकम्। ठञ्। शै॰। अपराह्णे भवम्।
आपूपिकः। ठक्। शै॰। अपूपाः भक्तिः भागोऽस्य सः।
आभिकः। ठक्। ठ॰। अभियावनतीति कदीइति।

आमलकम्। मयट्। मा॰ न स्यात्तक। आमलक्याः विकाररूपम्
आम्रमयम्। मयट्। मा॰ आम्राणां अवयवरूपं विकाररूपं वा। फलम्
आमितीयम्। छ। मा॰। आमित्रायेहितम्।
आयुधिकः। ठञ्। ठ॰। आयुधेन आयुधैर्वा जीवति।
आयुधीयः। छः। ठ॰। आयुधैर्जीवति आयुधीयः।
आरण्यकः। वुञ्। शै॰। अरण्ये भवः। पन्थाः अध्यायः न्यायः। विहारः मनुष्यः हस्ती चेते। गोमये आरण्यकाः पत्ते आणि अरण्याः वा।
आर्चः। णः। म॰। अर्चा अस्यास्तीति।
आर्ची। णः। म॰। अर्चा अस्याः अस्ति इति।
आर्द्धदेरुः अण्। ठञ्। अर्द्धेभवमिति
आर्द्धद्रोणिकः। ठञ्। आर्ही। अर्द्धद्रोणेन क्रीतः।
आर्द्धद्रोणिकम्। ठञ्। आर्ही। अर्द्धद्रोणेन क्रीतम्।
आर्यकल्पः। कल्पप्। इषदूनआर्य्य इति।
आवंत्यः। ञ्यङ्। अवंत्याः राजा। अवंते अपत्यं वा।
आशिषिकः। ठञ्। आशिषा जीवति।
आशौचम्। अण्। शै॰। अशुचेरपगतं। पक्षे। अशौचं। नशौचं अशौचं वा।
आश्वः। अञ्। चा॰। अश्वस्य भावः इति अश्वैरुह्यते इति वा। आण्। शै॰। रथः।
आश्वम्। अण्। चा॰। अश्वानां समूहः अश्वस्य भाव इति वा।
आश्वपतः। अण्। अप॰। अश्वपतेरपत्य इति।
आश्वपतम्। अश्वपतेरपत्यादि॰ अप॰ अण्।
आश्वः। अण्। शै॰। अश्वैरुह्यते। रथः
आश्विकः। ठक्। ठ। अश्वेन गच्छति चरतिवा कन्। तद्धा॰। अश्व इव मति कृतिः आश्विकः

आश्विकम्। अश्वेनगमनम्। ठक्· ठम·
आश्मः। अण्। प्रा· दीर्घ। अश्मनःविकारः।
आश्मनम्। अञ्। प्रा·। अश्मनः विकारमयम्।
आश्मरः। रः। चा·। अश्मना। अश्मभिर्वानिर्वृत्तः
आषाढः। अण्। चा·। आषाढी पौर्णमास्यस्यास्मिन्मासेति
आष्टमः। ञः। प्रागि्वी। अष्टमोभागः इति
आष्टाकपालः। अण्। चा·। अष्टस्वकपालेषुसंस्कृतःपुरोडाशः
आसिकः। ठक्। ठ·। असिः प्रहरणमस्येति।
आस्माकः। अण्। शै। आवयोः। अस्माकंवा।
आस्तिकः। ठक्। अस्तिपरलोकं मतौयस्येति।
आस्माकीनः। खञ्। शै·। आवयोः अस्माकंवा।
आस्यमात्रम्। मात्रच्। आस्यंप्रमाणमस्येति जलम्।
आह्निकम्। ठञ्। ठञ्·। अह्नानिर्वृत्तमाह्निकम्।
आक्षिकः। ठक्। ठ·। अक्षैर्दीव्यतिजयतिवा।
आक्षिकम्। ठक्। ठ·। अक्षैर्जितम् द्रव्यादि।
आक्षद्यूतिकम्। ठक्। ठ·। अक्षद्यूतेननिर्वृत्तंवैरं पांडवानां
यथा।
इतः। तसिल्। प्राग्दि·। अव्य·। अस्मादिति।
इत्थम्। थमु·। प्राग्दि·। अव्य। अनेनप्रकारेणेति।
इतरेद्युः। द्युस्। इतरस्मिन्नहनि।
इदानीम्। दानीम्। प्राग्दि·। अव्य·। अस्मिन्कालेइति।
इंद्रकल्पः। कल्पप्। इषदिन्द्रोनसमाप्यते इषद्ऊनः इं
द्रः इतिवा।
इयान्। मतुप्। म·। इयत्प्रमाणमस्येति।
इष्टी। इनिः। म·। इष्टमनेनेति।

इह। ह। प्राग्दि। अव्य:। अस्मिन् देशे। लोके। काले वेतिवर्त्तते
इहत्य:। त्यप्। शै०। इहभव:। जातादि:।
उख्यम्। यत्। चा०। उखापात्रविशेष: तस्यां संस्कृतम्।
उच्चकै:। अकच्। प्रागिवी। उच्चै:एव इति।
उडुलोमा:। अ:। उडुलोम्न: अपत्यानि
उत्क:। कन्। म०। उत्कंठितोयं। उत्क:
उत्कटम्। कटच्। तत्। उत ऊर्द्धंप्राप्नोतीति।
उत्कंठित:। इतच्। म०। उत्कण्ठासंजाता अस्य।
उत्का। कन्। म०। उत्कंठितास्त्री। नायिका।
उत्तरत:। तसिल्। प्रागिवी०। अव्य। उत्तरस्मादिति।
उत्तरपदिक:। ठन्०। उत्तरपदेवर्त्तते इति।
उत्तरतोवसति। अतसुच्। प्राग्दि०। अव्य०। उत्तरस्यांदिशि
उत्तरास्मिन् देशेवा इति।
उत्तरागत:। आति:। प्राग्दी०। अव्य०। उत्तरस्मादेशा दागत:
उत्तरेद्यु:। एद्युस्। उत्तरस्मिन्नहनि इति।
उत्साही। इनि:। म०। उत्साहोस्यास्तीति।
उदीच्यम्। यत्। उदीच्यांभवम्।
उद्गंधि:। इत्। उद्गंधोयस्येति।
उपत्यका। इतच्। म०। पर्वतस्य समीपे आरूढंस्थलम् इति
उपरिष्टाद्वसति। रिष्टाति:। प्राग्दी०। अव्य० ऊर्द्धं वसति।
उभयेद्यु:। एद्युस्। उभयस्मिन्। उभययोर्वा दिनयो: इति
उभयद्यु:। एद्युस्। प्राग्दि०। अव्ययं। उभयोरह्नो:।
उरसिल:। इलच्। म०। उर: अस्यास्तीति।
उरस्य:। यत्। शै०। उरसिभव:। उरसा एकदिक्। हारादय:
उरस्वान्। मतुप्। म०। उरोयस्तीति उरस्वान्।
उषस्यम्। यत्०। चा०। उष:प्रात:कालोदेवतास्येति। तस्येदमि
तिवा।

उष्णालुः। आलुच्। म०। उष्णं न सहते इति।
ऊरुदघ्नम्। दघ्नच्। म०। ऊरुप्रमाणमस्येति। जलम्।
ऊरुद्वयसम्। द्वयसच्। म०। ऊरुप्रमाणमस्येति।
ऊरुमात्रम्। मात्रच्। म०। ऊरुप्रमाणमस्येति।
ऊर्णायुः। युस्। ऊर्णायस्यास्तीति।
ऊर्ध्ववसति। रिल्। प्राग्दी। अव्यय० उच्चैर्वसति।
ऋतव्यम्। यत्। छसंबंधीयत् ऋतवेदितम्।
ऋष्यकम्। कः। चा०। ऋष्येण निर्वृत्तम्।
एकः। आकिन्। प्रागिवी। आकिनोलुक्। न सहायोस्येति।
एककः। कन्। शै०। असहायः एकाकी
एकदा। दा। प्राग्दि०। अव्य०। एकस्मिन् काले इति।
एकधा। धा। प्रागिवी। अव्य०। एकवारमिति।
एकध्यम्। ध्यमुञ्। प्रागिवी०। एकधा वार्थे ऽ इति।
एकधुरीणः। खः। प्राग्हि०। एकधुरं वहतीति।
एकविंशः। डट्। म०। एकविंशतेः पूरकः एकविंशः।
एकविंशतितमः। तमट्। म०। एकविंशतेः पूरणः इति।
एकशततमः। तमट्। म०। एकाधिकशतस्य पूरणः इति।
एकषष्टः। डट्। म०। एकषष्टेः पूरकः इति।
एकषष्टितमः। तमट्। म०। एकषष्टेः पूरणः इति।
एकाकी। आकिन्। प्रागिवी। न सहायोस्येति।
एतर्हि। र्हिल्। प्राग्दि०। अव्य०। एतस्मिन् काले।
एतावान्। मतुप्। म। एतावत्प्रमाणमस्येति।
ऐकध्यम्। ध्यमुञ्। प्रागिवि० एकस्य भावः इति एकधावारार्थे ऽ।
ऐणम्। अण्। प्रा०। एणस्य हरिणस्य विकाररूपम्।
ऐणेयम्। ढञ्। प्रा०। एण्याः विकाररूपं ढञ् एण्या अपत्यं वा।

ऐतिह्यम्। ष्यः। तद्धि०। इतिह इति।

ऐतिहासिकः। ठक्। चा। इतिहासमधीते० वेद वा।

ऐंद्रम्। अण्० चा०। इंद्रो देवता अस्य० इति।

ऐषमस्तनम्। ट्युल्। ट्युल्। शे०। षि कौ। ऐषमः इत्यव्ययं तत्रजा तादि।

ऐषमः। सप्तम्या म्। मा०। अस्मिन् संवत्सरे जातादि

ऐषमस्त्यम्। त्यप्। शे०। ऐषमः इत्यव्ययं तत्रजातादि।

ऐहलौकिकम्। ठञ्। शै०। इह लोके भवम्।

औडुपिकः। ठक्। ठ। उडुपेन तरति

औडुलोमिः। इञ्। अप०। उडुलोम्नोपत्यम्। बहुषु कारः उडुलो माः

औत्तराहः। आहञ्। शै०। उत्तरस्यां भवः जातादिर्वा।

औत्सः। अञ्। अप०। उत्सस्यापत्यादि।

औदश्वितः। ठक्। चा०। उदकेन श्वयति वर्द्धते इति उदश्वित्। उद श्वितः सः।

औडुंबरः। अण्०। चा। उडुंबराः संत्यस्मिन्।

औपगवः। अण्। अप। उपगोरपत्यम्। उपगोः गोत्रापत्यं वा उपगोरयं वार

औपगवी। अण्। अप०। उपगोरपत्यं स्त्री।

औपनिषदः। अण्। शै०। उपनिषद्भिः गम्यते इति।

औरसः। अण्। प्राग्दि०। उरसा निर्मितः इति।

औरस्यः। यत्। प्राग्दि०। उरसा निर्मितः पुत्रः औरस्यः। उरसः सकाशाद्भवतीति वा।

और्णम्। अञ्। प्राग्दी। ऊर्णायाः विकाररूपम्।

और्णिकम्। ठञ्। प्रा०। ऊर्णायाः विकाररूपम्। सूत्रम्।

औलपयः। ष्फः। तद्रा। औलपीयो। बहुत्वे० औलपयः।

औलूखलः। अण्०। शै०। उलूखले तुन्नाः।

औषधिकः। ठक्। चा॰। उषाचरति।
औष्ट्रम्। अञ्। उष्ट्रस्यभाव इति।
औष्णासम्। अण्। चा॰। उष्णासा दृष्टम्। साम।
औषणम्। अण्॰। चा॰। उषणासा दृष्टम साम। टिलोपोत्र।

कठाः। णीनिः। शै॰। तस्यस्तुक्। कंठेन प्रोक्तमधीयते।
कंठ्यः। यत्। कंठे भवः इति।
कंठ्यम्। यत्। छ। कंठे हितम्। इति।
कच्छुरः। रः। म॰। कच्छूरस्यास्तीति विग्रहः कच्छू इत्यस्य ह्रस्वत्वम्
कतरः। डतरच्। प्रागि॰। अनयोः कः।
कतमः।
कति। डति। म॰। कियत्प्रमाणं यस्येति। कति
कतिथः। डट्। म॰। कतिसंख्यकानां पूरण इति अनथुगागमः।
कतिधा। धा॰। प्राग्दी॰। कतिप्रकारः इति।
कतिपयथः। डट्। म॰। कतिपयसंख्यकानां पूरण इति।
कथम्। थमु॰। प्राग्दि॰। अव्य॰। केन प्रकारेणेति।
कदा। दा। प्राग्दि॰। अव्य॰। कस्मिन् काले इति।
कनिष्ठः। इष्ठन्। प्रागि॰। सर्वेषामतिशयेन अल्पः इति
कनीयान्। ईयसुन्। प्रागि॰। अयमनयोरतिशयेन कनिष्ठ इति
कर्णिका। कन्। शै॰। कर्णेभवा। भूषणम्।
कर्ण्यम्। यत्। यद्वि॰। कर्मणे हितम्।
कर्मण्यः। यत्। प्राग्घि॰। कर्मणि साधुः।
कवर्गीयम्। छः। शै॰। कवर्गे भवम्।
कर्हि। र्हिल्। प्राग्दि॰। अव्य॰। कस्मिन्काले। कदा इति।
काकम्। अण्। चा॰। काकानां समूहः।

काच्छः । अण् । शै॰ । कच्छदेशेभवः । काच्छः ।

काठिन्यम् । ष्यञ् । तत्स्त॰ । काठिनस्यभावः ।

काणेयः । ढक् । अप । काणस्यापत्यम् ।

काणेरः । ढ्रक् । अप॰ । काणस्यापत्यम् ।

काण्वाः । अण् । शै॰ । कण्वस्य छात्राः ।

कातीयाः । छः । अप॰ । कात्यायनस्यछात्राः अत्रफकःलुक् ।

कात्यायनीयाः । छः । अप । कात्यायनस्य छात्राः । अत्र नफकलुक् ।

कात्रेयकः । ढकञ् । शै॰ । कुत्सिताः त्रयः कत्रयः । तत्रजातादिः ।

काथिकः । ठक् । प्राग्घि । कथायांसाधुः । इति ।

काद्रवेयाः । ढक् । अप॰ । कद्र्वाः अपत्यानि ।

कानीनः । अण् । अप । कन्यायाः अपत्यं । कर्णो । व्यासश्च ।

कापेयम् । ढक् । कपेः भावः । इति ।

कापोतम् । अञ् । चा॰ । कपोतानांसमूहः ।

कापित्थम् । अण् । प्रा॰ । कपित्थस्यविकारःफल मिति ।

कायम् । अण् । चा॰ । कोब्रह्मादेवतास्येति ।

कारीरम् । अञ् । प्राग्दी । करीरस्यावयवः विकारःफलंवा ।

कारूषी । अण् । अप॰ । करूषाणां देशा[…]नांराज्ञी । दंतवक्त्रमहिषी

कार्तिकः । अण् । चा॰ । कार्तिकीपौर्णमासीयस्मिन्मासेसः ।

कार्पासम् । अण् । प्राग्दी॰ । कार्पासस्यविकारः तत् आच्छादनम् ।

कार्तिकी । अण् । चा॰ । कृत्तिकायुक्तापौर्णमासी ।

कार्तिकिकः । ठक् । चा॰ । कार्तिकीपौर्णमासीयस्मिन्मासेसः ।

कार्दमिकः । ठक् । चा॰ । कर्दमेनरक्तःपटः ।

कार्मार्यायणिः । फिञ् । अप॰ । कार्मार्यस्यापत्यम् । कर्मकारस्याप
त्यंकार्मार्यः

कार्मुकम् । उकञ् । ठञ्॰ । कर्मणि प्रभवतीति ।

कार्ष्णिः । इञ् । अप॰ । कृष्णस्यापत्यमिति ।

कालशेयम्। ढञ्। शै॰। कलशिर्घटः। तत्रभवं। पयः।

कालायाः। अण्। शै॰ कलादिनामो सक्तमधीयते।

कालिंगः। अण्। कलिंगदेशस्यराजा। कलिंगस्यापत्यंवा।

कालेयम्। ढक्। अप॰। कलेरपत्यादि।

कावचिकम्। ठञ्। चा॰। कवचिनांसमूहः।

काव्यम्। ष्यञ्। तत्त्व। कवेर्भावः कर्मवाकाव्यम्।

काशिका। ञिठ्। शै॰। काशिः देशविशेषः तत्रजातादि।

काशिकी। ठञ्। शै॰। काशिः देशविशेषः तत्रजातादि।

काशिलः। इल॰ चा॰। काशेननिर्वृत्तम्।

काषायम्। अण्॰ चा॰। कषायेणारक्तंवस्त्रम्।

कांस्यम्। कंसापद्दितं। कंसीयंकः तस्यविकारः यञ्। छस्य लुक्

कियंतः। मतुप्। म। कियत्प्रमाणंयस्येति।

कियान्। मतुप्। म। कियत्प्रमाणमस्येतिकियान्।

किरातार्जुनीयम्। छः। पौ॰। किरातार्जुनमधिकृत्यकृतम्।

कुंचकीयम्। छः। चा॰। कुंचकाभ्यो अदूरभवम्।

कुंजरः। रः। म॰। कुंजः हनुः देशः दंतावा। तदस्यास्तीति।

कुटीरः। रक्। प्रागिवी॰। अल्पाकुटी।

कुतः। तस्। प्राग्दि॰। अव्य॰। कस्मादिति।

कुत्र। त्रल्॰। प्राग्दि॰। अव्य॰ कस्मिन्निति।

कुत्साः। अण्। अप॰ कुत्सस्यापत्यानि॰। अणः लोपान्तकौत्साः

कुमारतरः। तरप्। अयमनयोरतिशयेनकुमारः इति।

कुमुद्वान्। मतुप्। चा॰। कुमुदानिसंत्यस्मिन्।

कुलीनः। खः। अप॰। कुलस्यापत्यं।

कुल्यः। यत्॰ अप॰। कुलेभवः। कुलस्यापत्यंवा।

कुसीदिकः। कुसीदायप्रयच्छतीति वृद्धिजीवी। व्याजजीया इतिभाषा
कुसुमितः। इतच्। कुसुमानिसंजातानि अस्येति।
कूर्चिका। ठन्। म॰। कूर्चमस्त्यस्याः साकूर्चिका॰ कूर्चश्मश्रु तूल
ए गुच्छेवा दाढी इति।
कुह। ह। प्राग्दि॰। अव्यय कस्मिन् काले इति किमः कुआदेशः
कृत्रिमं। मम्। ठ॰। उपन्नेर्थे कर्णेन निर्वृत्तम्।
कृशतमः। तमप्। प्रागि॰। अयमेषामतिशयेन कृशः
कृशतरः। तरप्। अयमनयोरतिशयेन कृश इति।
कृषिवलः। वलच्। म॰। कृषिः क्षेत्रादिकर्मास्यास्तीति।
कृष्णः। मतुप्। म॰। कृष्णो गुणोस्यास्ति इति।
कृष्णीकृतः। च्विः। तद्धा। अकृष्णः कृष्णः संपद्यते इति।
कृष्णीयान्। ईयसुन्। अयमेषामतिशयेन कृष्ण इति।
केकयी। अण॰ अप॰। केकयस्यराज्ञः अपत्यंयास्त्रीसाकेकयी।
केशचणः। चणप्। केशेनवित्त इति।
केशवः। वः। म॰। केशोस्यास्तीति।
केशवान्। मतुप्। म॰ प्रशस्ताः केशाः अस्यसन्तीति।
केशिकः। ठन्। म॰। केश केशोभग इतीर्यते। केशवती स्त्री॰
कैकेयी। अण्। अप॰। केकयदेशविशेषाणां राज्ञी।
कैदारकम्। वुञ्। चा॰ केदाराणां समूहः।
कैदारम्। अण्॰। चा॰ केदाराणां समूहः।
कैदारिकम्। ठञ्। चा॰ केदाराणां समूहः।
कैदार्यम्। यञ्। चा॰ केदाराणां समूहः।
कैशिकम्। ठक्। चा॰ केशानां समूहः।
कैश्यीयम्। छः। चा॰ केशानां समूहः।

केश्यम्। यः। चा॰। केशानांसमूहः।
कौंजायनः। च्फञ्। अप। कुंजस्यगोत्रापत्यम्।
कौंजायिन्यः। ञ्यः। अप॰। कौंजायनएव कौंजायन्यः।
कौंतिकः। ठक्। ठ॰। कुंतः प्रहरणमस्येति।
कौंभकारिः। इञ्। अप। कुंभकारस्यापत्यम्।
कौंभकार्यः। एयः। अप। कुंभकारस्यापत्यम्।
कौमारः। अञ्। चा॰। अपूर्वं पतिं कुमारीं पतिरुपपन्नः इति
कौमारः पतिः विवाहितः यद्वा अपूर्वपतिः कुमा
रीपतिमुपपन्ना कौमारीभार्या।
कौमारम्। अञ्। कुमारस्यभावः।
कौमारी। अञ्॰। चा॰। कुमारीपतिं उपपन्ना।
कौमुदिकः। ठक्। चा॰। कुमुदानि सन्त्यस्मिन्।
कौरवः। अण्। अप॰। बहुत्वेलुकि कुरवः।
कौरवकः। वुञ्। शै॰। कुरुषुदेशविशेषेषु। जातादिः।
कौरव्यः। ण्यः। अप॰। कुरोरपत्यं। कुरूणां राजावा।
कौलः। शै॰। कुलेजातादिः। अण्।
कौलटिनेयः। ढक्॰। अप॰। कुलटाया अपत्यम् भिक्षुकी सती कुलटा
कौलटेयः। ढक्॰। अप॰। कुलटाया अपत्यम् भिक्षुकी सती कुलटा
कौलटेरः। ढ्रक्॰। अप॰। व्यभिचारिण्याः कुलटाया अपत्यम्
कौलत्थम्। अण्। ठ॰। कुलत्थेन संस्कृतम्।
कौलेयः। ढक्॰। कुलेभवः।
कौलेयकः। ढकञ्॰। शै॰। कुलेजातादिः श्वेव। अन्यः कौलः
कौशलायनिः। फिञ्॰। अप॰। कुशलस्यापत्यम्।
कौशांबी। अण्॰। चा॰। कुशांबेन निर्वृत्ता
कौशेयम्। ढञ्। कोशेभवं। शे। जातम्।

कौसल्यः। ञ्यङ्। अप०। कोसलदेशानां राजा। कोसलस्यापत्यंवा।
कौस्तुभः। अण्। कुस्तुभएव।
कौसुंभम्। अण्। चो०। कुसुंभेनरक्तम्।
कौन्तेयकः। ढकञ्। शै०। कुन्तेर्जातादिः। असिरेव। अन्यः कौन्तः। अण्
कौन्तेयम्। ढञ्। कुन्तौभवम्।
कौन्तेयकः। वुञ्।
क्रमकः। वुन्। चा०। क्रममधीते। वेदवा।
क्रयविक्रयिकः। ठन्। ठ०। क्रयविक्रयेणजीवति।
क्रयिकः। ठन्। ठ०। क्रयेणजीवति।
क्रशिमा। इमनिच्। कृशस्यभावइति।
क्रशिष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेनकृशइति।
क्रौंचकीयः। छः। शै०। क्रौंचकस्यायम्।
क्रौशशतिकः। ढन्। कन्। ठन्०। क्रोशशतंगच्छतीति।
क्व। अत्। प्राग्दि०। अव्यय। कस्मिन्कालेइतिकस्मिन्देशे। स्थानेच
क्वत्यः। त्यप्०। शै०। क्वभवः। जातादिर्वा।
खरः। रः। म०। खरमिन्द्रियंराति। अभिभवतीति।
खल्यम्। यत्। छ०। खलायहितं। खलः खलवाडा अन्नकोथइ(इतिभाषा)
खल्या। यः। चा०। खलानांसमूहः।
खादिरम्। अञ्। प्रा०। खदिरस्यविकाररूपमवयवस्यवा।
खानित्रिकः। ठक्। खनित्रेणखनति।
गजता। तल्०। चा०। गजानांसमूहः।
गण्यः। यत्। प्राग्हितीयः। गणंलब्धा।
गरिमा। इमनिच्। गुरोर्भावइति।
गरिष्ठः। इष्ठन्। प्रागि०। सर्वेषामतिशयेनगुरुरिति।

गरीयान्। ईयसुन्। प्रागि॰। अयमेषामतिशयेन गुरुरिति।
गव्यम्। यत्॰ अप॰ गोर्विकारादि। गोरिदं गोर्विकारो वेति।
गव्यं॰। यत्॰। प्रा॰। गोर्विकारः। यत्॰ क्र। गोभ्यो हितं गव्यं।
गांगः। अण्। अप॰। गंगाया अपत्यम्।
गांगायनिः। फिञ्। अप॰। गंगाया अपत्यम्।
गांगेयः। ढक्। अप। गंगाया अपत्यम्।
गाणपतम्। गणपतेरपत्यादि॰ अप॰। अण्।
गाणपत्यः। गणपतेरपत्यादि॰। मंत्रविशेषः ण्य ञ्। अप॰।
गाणिक्यम्। ष्यञ्। चा॰। गणिकानां समूहः
गांभीर्यम्। ष्यञ्। शै॰। गंभीरस्य भावम्।
गार्गः। ण॰। अप॰। गार्ग्याः अपत्याः यस्येति ईलोपः।
गार्गिकः। ठक्। गार्ग्याः अपत्यम्।
गार्ग्यः। ण्यः। अप॰। गर्गस्य गोत्रापत्यं। यञ्वा। गर्गस्य गोत्रापत्यं।
गार्भिणम्। अण्। चा॰ गर्भिणीनां समूहः।
गार्ग्यायणः। फक्। अप॰। गार्ग्यस्य युवापत्यं। फञ्वा।
गार्ष्टेयः। ढक्। अप॰। सकृत्प्रसूताया गोरपत्यः। गृष्टेः।
गार्गीयाः। छः। अप॰। गर्गाणां छात्राः।
गार्हपत्यः। यत्। प्राग्दि॰। गृहपतिर्यजमानः तेन संयुक्तो गार्ह
पत्योग्निः
गुणवान्। मतुप्। गुणो यस्य यस्मिन् वा भवंतीति स्त्री चेत् गुणवती।
गुणी। इनिः। गुणं यस्यास्तीति।
गुरुतमः। तमप्। अयं सर्वेषामतिशयेन गुरुरिति।
गौतमाः। अण्॰। अप॰। गौतमस्यापत्यानि। बहुत्वे। पक्षे।
गौतमः। गौतमौ। गौतमाः।
गोता। तल्। तन्नमत्त्। गोर्भावः इति तलंतं स्त्रिकं।
गोत्वम्। त्व तन्नत्वत्। गोर्भावः गोत्वम्।

गोनर्दीयः। छः। शै॰। गोनर्दे देशे भवः।
गोमयम्। मयट्। प्रा॰। गोः पुरीषम्।
गोरूप्यम्। रूप्यः। प्र। गोभ्यो हेतुभ्य आगतमिति।
गौधारः। आरक्। अप॰। गोधाया अपत्यम्।
गौधेयः। ढक्। अप। गोधाया अपत्यम्।
गौधेरः। ढ्रक्। अप। गोधाया अपत्यम्।
गौनर्दः। अण्। शैषि। गोनर्दे भवः।
गौपुच्छिकः। ठञ्। ठ। गोपुच्छेन तरति।
गौरवम्। अण्। गुरोर्भावः इति। न ञ्नञ्।
गौरुतल्पिकः। ठक्। ठ॰। गुरुतल्पं गच्छतीति।
ग्रामता। तल्। चा॰। ग्रामाणाम्। समूहः।
ग्रामेयकः। ढकञ्। शै॰। ग्रामे जातादिः।
ग्राम्यः। यः। शै॰। ग्रामे जातादिः।
ग्रामीणः। खञ्। शै॰। ग्रामे जातादिः।
ग्रैवः। अण्। शै॰। ग्रीवायां जातादिः। विस्फोटकाद्याः।
ग्रैवेयम्। ढञ्। शै। ग्रीवायां भवम्।
ग्रैवेयकः। ढकञ्। शै। ग्रीवायां शोभने भवो।
ग्रैवेयकम्। ढकञ्॰ शै॰ ग्रीवायां शोभवं वा।
ग्रैष्मम्। अण्। शै॰। ग्रीष्मे भवम्।
ग्रैष्मिकम्। वुञ्। शै। ग्रीष्मे जातम्।
ग्लुचुकायनिः। फिञ्। अप॰। ग्लुचुकस्य गोत्रापत्यं सामान्या पत्येपि
ग्लौचुकायनः। अण्। अप॰। ग्लुचुकायनेः युवापत्यं। तच्छात्रोपि
घटिकः। ठन्। ठ॰। घटेन तरति।
चतुर्थः। अन्। भागिवी॰ चतुर्थो भाग इति।
चतुर्धा। धा॰। प्रागि। वीं॰। चतुः प्रकारः इति।

चपलतमा। तमप्। प्रागि॰ सर्वेषामतिशयेन चपला इति।
चपलतरः। तरप्। प्रागि॰। अयमनयोरतिशयेन चपलः।
चरकः। णिनिः। शै॰। चरकेण प्रोक्तमधीयते प्रत्ययस्य लुक्
चर्मण्वती। मतुप्। मं॰। चर्मास्त्यस्यामस्या वा।
चाक्रिणः। अण्॰ अप॰। चक्रिणः अपत्यम्।
चाटकैरः। ऐरक्। अप॰। चटकाया अपत्यम्।
चाण्डालकिः। इञ्। अप॰। चाण्डालस्यापत्यम्।
चाणकीनम्। खञ्। म॰। चणकानां भवनं क्षेत्रं।
चातुरम्। अण्॰ शै॰। चतुर्भिरुह्यते।
चातुर्मासी। अण्॰। ठञ्॰। चतुर्षु मासेषु भवती या।
चातुर्वर्ण्यम्। ष्यञ्। तत्स्वत्। चत्वारो वर्णाः इति।
चान्द्रायणम्। अण्। चन्द्रायणस्य भावः इति।
चारकीणम्। खञ्। छ॰। चरकाय हितमिति।
चारायणः। फक्। चरस्य गोत्रापत्यम्।
चाक्षुषम्। अण्॰। शै॰। चक्षुषा गृह्यते इति रूपम्।
चिरत्नम्। त्नः। शै॰। चिरकाले भवं। चिरकालाद्भूतम्।
चिरंतनम्। ट्यु। ट्युल्॰ शै॰। चिरकालात्भूतम्।
चिरंतराम्। आम्। प्रागिवी। चिरंतरमेव चिरंतराम्। अव्य॰
चूडालः। लच्। चूडाऽस्यास्तीति।
चैत्रः। अण्॰ चा॰ चैत्री पौर्णमासी यस्मिन्मासे सः।
चैत्रवत्। वतिः। तत्रतत्। चैत्रस्येवेति।
चैत्रिकः। ठक्। चा। चैत्री पौर्णमासी यस्मिन्मासे सः।
छात्रः। णः। ठ॰। गुरोर्दोषाणामाच्छादनं शीलमस्येति।
छान्दोग्यम्। ञ्यः। शै॰। छन्दोगानां धर्म आम्नायो वा।
जघन्यः। यत्। तद्रा॰। जघन्यमिवेति।

जनकीयम्। छः। शै॰ जनेभवं। जनस्येदंवा।
जनता। तल्। बा॰ जनानांसमूहः॥
जंबु। ग्रन्। मा॰ मस्यलोपात्रहदिः॥ जंव्वाःविकारहूपं। फलंजंबु
जाड्यम्। ष्यञ्। तन्त्वन। जडस्याभावइति।
जानुषम्। अण्। मा॰ जल्लुनोविकारहूपं। अवयवहूपंवा।
जानकी। अण्॰ अप॰ जनकस्यापत्यंस्त्री।
जानपदः। अण्॰। जनपदोयस्यसः॥
जानुदघ्नम्। दघ्नच्। जानुप्रमाणमस्यजलस्येति।
जिह्वामूलीयम्। छः। शै॰ जिह्वामूलेभव।
ज्यायान्। ईयसुन्॰ प्रागि॰ अयमेषामतिशयेन ज्येष्ठइति।
ज्येष्ठः। इष्ठन्। प्रागि॰ सर्वेषामतिशयेम वृद्धःप्रशस्योवा इति।
ततः। तस्। तसिल्॰ प्राग्दि॰। अव्य॰। तस्मादिति।
ततरः। उतरः। प्रागिवी। तत्संख्याकः॥
ततस्त्यः। त्यप्। शै॰ ततोभवः ततोजातादिर्वा।
तत्कः। कन्। मन तस्यायंतत्कः॥
तत्र। त्रल्। प्राग्दि॰ अव्य॰ तस्मिन्निति।
तथा। थाल्। प्राग्दि॰ अव्य॰। तेनप्रकारेणेति।
तत्रत्यः। त्यप्॰ शै॰ तत्रभवः॥ तत्रजातादिर्वा।
तदा। दा॰ प्राग्दि॰ अव्य॰ तस्मिन्‌काले इति।
तदानीम्। दानीम्। प्राग्दि॰ अव्य॰। तस्मिन्‌काले इति।
तदीयः। छः। शै॰ तस्मिन्‌भवः। तस्यायंवा।
तद्वर्गः॥ शै॰। तत्सजातीयसमूहः।
तद्वर्गीयः। छः। शै॰ तद्वर्गेस्यायम्।
तद्वर्गीणः। खः। शै॰ तद्वर्गेभवः।
ततिमा। इमनिच्। तन्त्र॰ ततोभावः इति।

